# विषयानुक्रमणिका।



---

Printed by Mr. L. V. Saptarshi, at Prabhakar Printing Press, 82 Budhwar Peth, Poona City.

Published by Dr. N. G. Sardesai, for Oriental Book Agency, 15 Shukrawar Peth, Poona City.

ॐ

# अथ प्रस्तावना

" प्राचीनेष्वलंकारनिबन्धेषु ( अस्मदवलोकितेषु ) वामनवृत्तिरेवोत्कृष्टा। तस्यां क्वापि क्वापि समीचीना युक्तिरुद्भाविता। शब्दशुद्धिं विना प्रासङ्गिकविषयो नावर्णि, नापि च श्रृङ्गाररसः, यदनुषङ्गादश्लीलतादोषस्य संभवः। अत एव नास्ति तत्राश्लीलता दोषः। नापि चेयं वृत्तिरतीव विस्तृता। प्रसिद्धेषु तावदलंकारनिबन्धेषु बालानां प्रथमपाठोपयोगिन्येषैवेतिमन्यामहे "। इति स्वमुद्रितकाव्यप्रकाशोपोद्धाते न्यायरत्नश्रीयुतमहेशचन्द्रपण्डिताः। पण्डितां वरस्यानयोक्त्यैव वयमस्य ग्रन्थस्य ( अन्यत्र प्रकाशितस्यापि ) प्रकाशनाय चोदिताः।

वृत्तिसमेतकाव्यालंकारसूत्राणां प्रणेतुरलंकारशास्त्रज्ञस्य श्रीवामनस्य जीवितसमयो जन्मस्थानं च सम्यङ् निर्णेतुं न शक्यते। किंतु तस्य जीवनस्य शककाल एव पुराविद्भिर्दर्शितपथेनानुमीयते।

' इयं गेहे लक्ष्मी ' रिति महाकविभवभूतिप्रणीतोत्तररामचरितस्थस्य श्लोकस्योपन्यासाद् वामनो भवभूतेरनन्तरं संबभूवेत्यनुमितुं शक्यम्। भवभूतिस्तु कान्यकुब्जमहीपालयशोवर्मणः सभायां ख्रिस्तीयसप्तमशकोत्तरार्धाष्टमशकपूर्वार्धयोर्मध्य आसीदिति पण्डिता मन्यन्ते। तस्मात् ख्रिस्तीयसप्तमशकोत्तरार्धो वामनस्य जीवितकालस्योपरितनी सीमेति स्पष्टमेव।

तस्य जीवतस्याधस्तनी मर्यादा राजशेखरस्य वामनकाव्यालंकारसूत्रस्यावतरणाद् वामनीया ( वामनानुचरा ) इति संबोधनाच्चोह्यते। सा च ख्रिस्तीयनवमशकोत्तरार्धा। केचित् " अथ च ध्वन्यालोकलोचने प्रथमोद्द्योते ' वामनाभिप्रायेणायमाक्षेपः भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृद्' इति वदन्तः श्रीमदाचार्याभिनवगुप्तपादा ध्वन्यालोककर्तुः श्रीमदाचार्यानन्दवर्धनस्य प्राचीनत्वं प्रकटयन्ति" इति मन्यन्ते। एष पक्षोऽप्युपरितननिर्दिष्टकाल- ( ख्रिस्तीयनवमशकोत्तरार्धं ) मेव निर्दिशति, यतः काश्मीरेष्ववन्तिवर्मराज्यसमये नवमशकोत्तरार्धे श्रीमदानन्दवर्धनाचार्य आसीदिति राजतरङ्गिण्याः प्रतीयते। श्रीमदाचार्यनन्दवर्धनस्तु वामनाचार्यं न कदापि प्रत्यक्ष-

मुपाक्षिपति । किंतु स्ववृत्त्यां वामनाचार्यस्य रीतिसिद्धान्तमुद्दिश्य लिखतीति स्पष्टं भाति । अत एव वामनाचार्यो भामहदण्डयुद्भटप्रभृतय इव श्रीमदाचार्यानन्दवर्धनेनोपन्यस्ताद् ध्वनिसिद्धान्तात् पूर्वं समजायत इत्यनुमीयते । दृढी करोति चैतदेवानुमानं प्रतीहारेन्दुराजो ध्वन्यालंकारं विवरणमानः । एवं सति वामनाचार्यः सप्तमशकोत्तरार्धनवमशकपूर्वार्धयोर्मध्ये संबभूवेति स्पष्टमेव ।

काश्मिरमहीपतेः श्रीजयापीडस्य मन्त्री कश्चन वामननामासीदिति राजतरङ्गिण्या एतेन श्लोकेन ज्ञातम् ।

" मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा ।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥ "

काश्मीराधिराजः श्रीजयापीडस्त्वष्टमे शतके संबभूवेति निश्चितम् । अत एव जयापीडस्य मन्त्री वामनः काव्यालंकारसूत्राणां प्रणेता वामनश्चैक एवेति बुह्लरादयः । एवं गते नवमशतकेऽधिवसन्नुद्भटो वामनश्च समकालीनौ प्रतिस्पर्धिनौ चेति ज्ञायते ।

तिप्पभूपालगोविन्द [ गोपेन्द्र ] कृता कामधेनुटीका मूलस्यातीव विशदं विवरणमस्तीत्यस्या असकृद् मुद्रणात् सिद्धम् । अस्य गोविन्दस्यापि विषये न किंचिज्ज्ञातुं शक्यम् । अनेन दाक्षिणात्यनृपतिना भवितव्यम् । अन्यग्रन्थकारानुपाक्षिपन्नसौ विद्याधरविद्यानाथभट्टगोपालप्रभृतीन् धर्मदासमूरेर्विदग्धमुखमण्डनं चोद्दिश्य स्वव्याख्याने लिखति । अत एवानेन चतुर्दशशतकानन्तरं भवितव्यम् ।

एतस्मिन् ग्रन्थे यत्र यत्र मूलं ग्राहयितुमतीव सुदुष्करं तत्र तत्रैव कामधेनुटीकाया उद्धारः कृतः । यत्र तु मूलमात्रस्य वाचनेनैवार्थप्रतीतिर्भवति तत्र टीकया किमिति समग्रा टीका न मुद्रिता । अस्य ग्रन्थस्यायमेको विशेषः । अस्य प्रकाशनस्यान्यद्विशिष्टं लिङ्गमेवमस्ति यद् दक्षिणविद्यालये [ Deccan College ] राज्यकर्तृभिर्न्यस्तानां हस्तलिखितग्रन्थानां [ Govt. Mss. Library] न केनापि प्रकाशकेनाद्याप्युपयोगः कृतः । तेषां चतुर्णां ग्रन्थानां साहाय्येनैष ग्रन्थः संशोधितः । पाठान्तराणां ( एषां ग्रन्थमूले स्वीकारो न कृतः ) परिशिष्टं ग्रन्थावसान उपाहितम् ।

### पण्डितवरश्रीवामनविरचितानि

# काव्यालंकारसूत्राणि

### वृत्तिसमेतानि

कामधेनुसंकलितटिप्पणीसहितानि च ।



## शारीरं नाम प्रथममधिकरणम् ।

### प्रयोजनस्थापना नाम प्रथमोऽध्यायः ।

प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया ।
[1]काव्यालंकारसूत्राणां स्वेषां[2] वृत्तिर्विधीयते[3] ॥

---

श्रीः

अध्याये प्रथमे काव्यप्रयोजनपरीक्षणम् ।
अधिकारिविचारश्च द्वितीये रीतिनिश्चयः ॥ १ ॥
काव्याङ्गकाव्यभेदानां तृतीये प्रतिपादनम् ।
तुर्ये पदपदार्थानां दोषतत्त्वविवेचनम् ॥ २ ॥
वाक्यवाक्यार्थदोषाणां पञ्चमे तु प्रपञ्चनम् ।
गुणालंकारभेदस्तु षष्ठे शब्दगुणास्तथा ॥ ३ ॥
सप्तमेऽर्थगुणाः शब्दालंकाराः पुनरष्टमे ।
उपमा नवमे तस्याः प्रपञ्चो दशमे भवेत् ॥ ४ ॥
काव्यस्यैकादशे संविद्द्वादशे शब्दशोधनम् ।
इत्येष द्वादशाध्यायीप्रमेयाणामनुक्रमः ॥ ५ ॥

१ काव्येति । 'कमनीयं काव्यम्' इति लोचनकारः । 'कवयति इति कविः, तस्य कर्म काव्यम्' इति विद्याधरः । 'कौति शब्दायते विमृशति रसभावान् इति कविः, तस्य कर्म काव्यम्' इति भट्टगोपालः । 'लोकोत्तरवर्णनानिपुणकविकर्म काव्यम्' इति काव्यप्रकाशकारः । भामहोऽपि 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता । तदनुप्राणनाज्जीवेद्वर्णनानिपुणः कविः ॥ तस्य कर्म स्मृतं काव्यम्' इति । तदेतत्काव्यशब्दव्युत्पत्तिकथनम् । चारुताशालिशब्दार्थयुगलं काव्यमिति रूढोऽर्थः ।

२ स्वेषामिति । सूत्रवृत्त्योरेककर्तृकत्वप्रतिपादनेन सूत्रकाराभिमतार्थप्रतिपादिनी वृत्तिः, वृत्तेरन्यकर्तृकत्वशङ्काविरहश्चेत्युभयमप्युपाक्षिप्यते ।

३ वृत्तिलक्षणमुक्तं भामहेन, 'सूत्रमात्रस्य या व्याख्या सा वृत्तिरभिधीयते ।' इति ।

**काव्यं ग्राह्यमलंकारात् ॥ १ ॥**

काव्यं खलु ग्राह्यमुपादेयं भवति । अलंकारात् । काव्यशब्दोऽयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्तते । भक्त्या[1] तु शब्दार्थमात्रवचनोऽत्र गृह्यते ।

कोऽसावलंकार इत्यत आह—

**सौन्दर्यमलंकारः ॥२॥**

अलंकृतिरलंकारः । करणव्युत्पत्त्या पुनरलंकारशब्दोऽयमुपमादिषु वर्तते ।

**स दोषगुणालंकारहानादानाभ्याम् ॥ ३ ॥**

स खल्वलंकारो दोषहानात् । गुणालंकारादानाच्च संपाद्यः कवेः ।

**शास्त्रतस्ते ॥ ४ ॥**

ते दोषगुणालंकारहानादाने शास्त्रादस्मात् । शास्त्रतो हि ज्ञात्वा दोषाञ्जह्यात् । गुणालंकारांश्चाददीत ।

किं पुनः फलमलंकारवता काव्येन येनैतदर्थोऽयं यत्न इत्याह—

**काव्यं सदृष्टादृष्टार्थम् । प्रीतिकीर्तिहेतुत्वात् ॥५॥**

काव्यं सच्चारु दृष्टप्रयोजनम् । प्रीतिहेतुत्वात् । अदृष्टप्रयोजनम् । कीर्तिहेतुत्वात् । अत्र श्लोकौ[2]—

'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्तिवर्तनीं त्वेवं कुकवित्वविडम्बनाम् ॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम् ॥

---

१ भक्त्येति । भक्त्या उपचारेण । 'भज्यते सेव्यते मुख्यार्थोऽनयेति भक्तिः उपचारः लक्षणेत्यर्थः । '

२ अमुमेवार्थमन्वयव्यतिरेकाभ्यामभियुक्तोक्तिसंवादेन समर्थयते ।

तस्मात्कीर्तिमुपादातुमकीर्तिं तु निबर्हितुम् ।
काव्यालंकारशास्त्रार्थः प्रसाद्यः कविपुंगवैः ॥'

इति काव्यलंकारसूत्रवृत्तौ शारीरे[1] प्रथमेऽधिकरणे प्रयोजनस्थापना नाम प्रथमोऽध्यायः ।

---

अधिकारिचिन्ता रीतिनिश्चयश्च नाम द्वितीयोऽध्यायः ।

अधिकारिनिरूपणार्थमाह—

**अरोचकिनः सतृणाभ्यवहारिणश्च कवयः ॥ १ ॥**

इह खलु द्वये कवयः संभवन्ति—अरोचकिनः, सतृणाभ्यवहारिणश्चेति । अरोचकिसतृणाभ्यवहारिशब्दौ गौणार्थौ । कोऽसावर्थः—विवेकित्वमविवेकित्वं चेति ।

तदाह—

**पूर्वे शिष्याः । विवेकित्वात् ॥ २ ॥**

पूर्वे खल्वरोचकिनः शिष्याः शासनीयाः । विवेकित्वाद्विवेचनशीलत्वात् ।

**नेतरे । तद्विपर्ययात् ॥ ३ ॥**

इतरे सतृणाभ्यवहारिणो न शिष्याः । तद्विपर्ययादविवेचनशीलत्वात् । न च शीलमपाकर्तुं शक्यम् ।

---

१ **शारीर इति ।** प्रथमं काव्यशरीरम्, तदनु दोषाः, ततो गुणाः, तदनन्तरमलंकाराः, ततः शब्दप्रयोगशैलीति क्रमेण पञ्चाधिकरणानि । तत्र काव्यशरीरमधिकृत्य कृतमिति शारीरमधिकरणम् । अधिक्रियन्तेऽवान्तरप्रमेयरूपाणि प्रकरणान्यस्मिन्महाप्रमेयात्मनीत्यधीकरणं प्रमेयविरतिस्थानम् । 'विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' इति त्वन्यत्र दृश्यते ।

२ प्रयोजने काव्यस्य प्रतिष्ठापिते तदर्थितया अधिकारिणो निरूपणीया इत्याध्यायद्वयसंगतिमधिगमयति ।

नन्वेवं न शास्त्रं सर्वानुग्राहि कुतस्तदुपादीयते तदाह—

**न[1] शास्त्रमद्रव्येष्वर्थवत् ॥ ४ ॥**

न खलु शास्त्रमद्रव्येष्वविवेकिष्वर्थवत् ।

निदर्शनमाह—

**न कतकं पङ्कप्रसादनाय ॥ ५ ॥**

नहि कतकं पयस इव पङ्कस्य प्रसादनाय प्रभवति ।

अधिकारिणो[2] निरूप्य रीतिविनिश्चयार्थमाह—

**रीतिरात्मा[3] काव्यस्य ॥ ६ ॥**

रीतिर्नामेयमात्मा काव्यस्य । शरीरस्येवेति वाक्यशेषः ।

का पुनरियं रीतिरित्याह—

**विशिष्टा पदरचना रीतिः । ॥ ७ ॥**

विशेषवती पदानां रचना रीतिः ।

कोऽसौ विशेष इत्याह —

**विशेषो गुणात्मा ॥ ८ ॥**

वक्ष्यमाणगुणरूपो विशेषः ।

**सा त्रिधा —वैदर्भी गौडीया पाञ्चाली च ॥ ९ ॥**

सा चेयं रीतिस्त्रिधा भिद्यते—वैदर्भी, गौडीया, पाञ्चाली चेति ।

---

१ न शास्त्रमिति । शास्त्रोपदेशद्वारा यत्र सद्भिराधीयमना गुणाः संक्रामन्ति, तद्द्रव्यामिहि विवक्षितम् । तद्विपरीतान्यद्रव्याणि गुणहीना अविवेकिन इति यावत् । अत्र गाथा, ' अयं भस्मनि होमः स्यादियं वृष्टिर्मरुस्थले । इदमश्रवणे गानं यज्जडे शास्त्रशिक्षणम् ॥ ' इति ।

२ अधिकारिण इति । कर्तृनिरूपणानन्तरं कर्मनिरूपणमुचितमिति संगति. ।

३ रीतिर्नामेति । रिणन्ति गच्छन्ति अस्यां गुणा इति, रीयते क्षरत्यस्यां वाङ्मधुधारेति वा रीतिः । ' काव्यस्यात्मा ध्वनिरिति बुधै र्यः समाम्नातपूर्वः ' इत्यानन्दवर्धनः । ' शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्गयवैभवम् ' इति विद्यानाथः । वाग्वैदग्ध्यप्रधानेपि रस एवात्र जीवितम् ' इत्यग्निपुराणम् । ' काव्यस्यात्मनि सङ्गिनि रसादिरूपे न कस्यचिद्विमतिः ' इति व्यक्तिविवेकः । ' ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ' इति काव्यप्रकाशः । ' अलंकारास्त्वलंकारा गुणा एव गुणाः सदा । औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ' इति क्षेमेन्द्रः । ' वक्रोक्तिः काव्यजीवितम् ' इति वक्रोक्तिजीवितकारः ।

किं पुनर्देशवशाद्द्रव्यवद्गुणोत्पत्तिः काव्यानाम्, येनायं देशविशेषव्यपदेशः । नैवम् यदाह--

**विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥ १० ॥**

विदर्भगौडपाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वात्तत्समाख्या । न पुनर्देशैः किंचिदुपक्रियते काव्यानाम् ।

तासां गुणभेदाद्भेदमाह--

**समग्रगुणा वैदर्भी ॥ ११ ॥**

समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरुपेता वैदर्भी नाम रीतिः ।

अत्र श्लोकौ--

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥'

तामेकामेवं कवयः स्तुवन्ति--

'सति वक्तरि सत्यर्थे सति शब्दानुशासने ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥'

अत्रोदाहरणम् —

'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनु[१]: ॥'

शा. २.६.

---

१ तथा हि—'छायाबद्धकदम्बकम्' 'शिथिलज्याबन्धम्' इत्यत्र बन्धस्य गाढत्वादोजः। 'छायाबद्धकदम्बकं मृगकुलम्' इत्यत्र बन्धस्य गाढत्वशैथिल्ययोः संप्लवात्प्रसादः। 'महिषा निपानसलिलम्' इत्यत्र मसृणत्वाच्छ्लेषः। 'गाहन्ताम्' इत्यारभ्य येनैव मार्गेण उपक्रमः, तेनैव मार्गेण उपसंहार इति। मार्गाभेदात्समता। 'गाहन्ताम्' इत्यत्रारोहः। 'महिषाः' इत्यत्रावरोहः। एवमन्यत्रापि आरोहावरोहक्रमस्फुरणात्समाधिः। 'शृङ्गैर्मुहुस्ताडितम्' इति पृथक्पदत्वान्माधुर्यम्। 'रोमन्थमभ्यस्यतु' इत्यादौ बन्धस्याजरठत्वात्सौकुमार्यम्। 'शिथिलज्याबन्धमस्मद्धनुः' इत्यत्र बन्धस्य विकटत्वादुदारता। पदानामुज्ज्वलत्वात्कान्तिः। अर्थाभिव्यक्तिहेतुत्वादर्थव्यक्तिरिति दिङ्मात्रप्रदर्शनम्। गुणस्वरूपनिरूपणं तु गुणविवेचने अधिकरणे करिष्यते।

**ओजःकान्तिमती गौडीया ॥ १२ ॥**

ओजः कान्तिश्च विद्येते यस्यां सा ओजःकान्तिमती गौडीया नाम रीतिः। माधुर्यसौकुमार्ययोरभावात् । समासबहुला अत्युल्बणपदा च ।

अत्र श्लोकः–

'[१]समस्तात्युत्कटपदामोजःकान्तिगुणान्विताम् ।
गौडीयामिति गायन्ति रीतिं रीतिविचक्षणाः ॥ '

उदाहरणम्[२]——

' दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर–
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति[३] ॥'

महावीरचरित १.५४

**माधुर्यसौकुमार्योपपन्ना पाञ्चाली ॥ १३ ॥**

माधुर्येण सौकुमार्येण च गुणेनोपपन्ना पाञ्चाली नाम रीतिः । ओजःकान्त्यभावादनुल्बणपदा विच्छाया च ।

तथा च श्लोकः——

आश्लिष्टश्लथभावां तु पुराणच्छाययाश्रिताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥ '

---

१ समस्तेति । समस्तानि समासवृत्तिमापन्नानि अत्युद्भटानि पदानि यस्या इति विग्रहः ।

२ एषा खलु धनुर्धरधुरन्धरेण रघुनन्दनेन गाढाकर्षणात्खण्डिते खण्डपरशोः कोदण्डे तद्भङ्गसंघटितनिराघाटघोषवर्णनोपोद्घातेन तदैव भुजबलभूमानमभिलक्षयतो लक्ष्मणस्योक्तिः ।

३ अत्र बन्धस्य गाढत्वौज्ज्वल्ययोरुत्कटत्वादुल्बणावोजःकान्तिगुणौ । समासभूयस्त्वोल्बणपदत्वे चातिस्फुटे ।

अत्रोदाहरणम्—

'ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥'

एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति ।

**तासां पूर्वा ग्राह्या । गुणसाकल्यात् ॥ १४ ॥**

तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या । गुणानां साकल्यात् ।

**न पुनरितरे । स्तोकगुणत्वात् ॥ १५ ॥**

इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये । स्तोकगुणत्वात् ।

**तदारोहणार्थमितराभ्यास इत्येके ॥ १६ ॥**

तस्या वैदर्भ्या एवारोहणार्थमितरयोरपि रीत्योरभ्यास इत्येके मन्यन्ते ।

**तच्च न । अतत्त्वशीलस्य तत्त्वानिष्पत्तेः ॥ १७ ॥**

नह्यतत्त्वं शीलयतस्तत्त्वं निष्पद्यते ।

निदर्शनार्थमाह—

**न शणसूत्रवानाभ्यासे त्रसरसूत्रवानवैचित्र्यलाभः ॥ १८ ॥**

---

१ ग्राम इति । इयं हि कस्यचिद्ग्रामीणस्य गृहे निशि निद्रातुं भद्रवेदिमधिशय्य पर्जन्यगर्जितैस्तर्जिते निजनिदेशापचारनिष्कृपकुपितकुसुमशरशरव्रातपाताक्लिष्टतया निर्विष्टवति कष्टां दशां वैदेशिके तद्दण्डपातभीतिसमाकुलायाः कुलवृद्धायाः पुनरन्यमध्वन्यं प्रत्युक्तिः ।

२ वाहारोहाय बालस्य मेषारोहानुशीलनवद्वैदर्भीसंदर्भलाभाय तदितराभ्यास इति केचिदाचक्षते । तत्पक्षं प्रतिक्षेप्तुमुपक्षिपति—तदारोहणार्थमिति ।

३ न ह्यतादृशं कर्म परिशीलयतस्तादृशकर्मकौशलं सिध्यति । यथा लोके वाजिनमारुरुक्षतो राजपुत्रादेस्तदुपयोगिजान्ववष्टम्भजवगतिमण्डलीक्रियादिसिद्धये मेषारोहाभ्यासो दृश्यते, न तथा कस्यचिदपि कुविन्दस्य सूक्ष्मतन्तुवानकौशलसिद्ध्यै गोणीवानाभ्यासो दृष्टः; तयोर्वैसादृश्येन उपयोगाभावात् । अतो वैदर्भीसंदर्भलाभाय गौडीयपाञ्चालरीत्योरभ्यास इति मतमनादरणीयम् ।

नहि [1]शणसूत्रवानमभ्यस्यन्कुविन्दस्त्रसरसूत्रवानवैचित्र्यं लभते ।

**सापि समासाभावे शुद्धवैदर्भी ॥ १९ ॥**

सापि च वैदर्भी रीतिः शुद्धवैदर्भी भण्यते। यदि समासवत्पदं न भवति।

**तस्यामर्थगुणसंपदास्वाद्या ॥ २० ॥**

तस्यां वैदर्भ्यामर्थगुणसंपदास्वाद्या भवति ।

**तदुपारोहादर्थगुणलेशोऽपि ॥ २१ ॥**

तदुपधानतः खल्वर्थलेशोऽपि स्वदते । किमङ्ग, पुनरर्थगुणसंपत् ।

तथा चाहुः——

[2]'किं त्वस्ति काचिदपरैव पदानुपूर्वी
यस्या न किंचिदपि किंचिदिवावभाति ।
आनन्दयत्यथ च कर्णपथं प्रयाता
चेतः सताममृतवृष्टिरिव प्रविष्टा ॥
वचसि यमधिगम्य स्पन्दते वाचकश्री-
र्वितथमपि तथात्वं यत्र[3] वस्तु प्रयाति ।
उदयति हि स तादृक्क्वापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः ॥

---

१ शणसूत्रं गोण्याद्युपादानम् । त्रसरतन्तुः श्लक्ष्णवस्त्राद्युपादानम् । वानमिति-वयतेर्ल्युटि रूपम् ।

२ किं त्विति । यस्यां पदानुपूर्व्याम् । न किंचिदपि असदपि वस्तु। किंचिदिव सदिव । अवभाति प्रतिभाति, प्रबन्धप्रौढिमकटितपदघटनापरिपाटिवशात्कल्प्यं वस्तु प्रत्यक्षायमाणं प्रतिभासत इत्यर्थः । यदाहुः, 'अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥' इति ।

३ यत्र यस्मिन्वैदर्भीपाके । वितथं नीरसं वस्तु। अवितथत्वं सरसत्वम् । प्रयाति । तदुक्तं लोचने, 'जगद्ग्रावप्रख्यं निजरसभरात्पूरयति च' इति । अन्यच्च, 'भावानचेतनानपि चेतनवच्चेतनानचेतनवत् । व्यवहारयति यथेच्छं सुकविः काव्ये स्वतन्त्रतया ॥' इति ।

**सापि वैदर्भी । तात्स्थ्यात् ॥**

[1]सापीयमर्थगुणसंपद्वैदर्भीत्युक्ता । तात्स्थ्यादित्युपचारतो व्यवहारं दर्शयति ।

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे अधिकारचिन्ता रीतिनिश्चयश्च नाम द्वितीयोऽध्यायः ।

---

काव्याङ्गानि काव्यविशेषश्च नाम तृतीयोऽध्यायः ।

रीतितत्त्वं निरूप्य काव्याङ्गान्युपदर्शयितुमाह—

**लोको विद्या प्रकीर्णं च काव्याङ्गानि ॥ १ ॥**

उद्देशक्रमेणैतद्व्याचष्टे—

**लोकवृत्तं लोकः ॥ २ ॥**

लोकः स्थावरजङ्गमात्मा तस्य वर्तनं वृत्तमिति ।

**शब्दस्मृत्यभिधानकोषच्छन्दोविचितिकलाकामशास्त्रदण्डनीति-पूर्वा विद्याः ॥ ३ ॥**

शब्दस्मृत्यादीनां तत्पूर्वकत्वं पूर्वं काव्यबन्धेष्वपेक्षणीयत्वात् ।

तासां काव्याङ्गत्वं योजयितुमाह—

**शब्दस्मृतेः शब्दशुद्धिः ॥ ४ ॥**

शब्दस्मृतेर्व्याकरणाच्छब्दानां शुद्धिः साधुत्वनिश्चयः कर्तव्यः । शुद्धानि हि पदानि निःशङ्कैः कविभिः प्रयुज्यन्ते ।

**अभिधानकोषतः पदार्थनिश्चयः ॥ ५ ॥**

[3]पदं हि रचनाप्रवेशयोग्यं भावयन्संदिग्धार्थत्वेन न गृह्णीयान्न वा जह्यादिति काव्यबन्धविघ्नः । तस्मादभिधानकोषतः पदार्थनिश्चयः कर्तव्य इति । अपूर्वाभिधानलाभार्थत्वं त्वयुक्तमभिधानकोषस्य । अप्रयुक्तस्याप्रयोज्यत्वात् ।

---

१ सापीति । तस्मिन् तिष्ठतीति तत्स्थः, तस्य भावः तात्स्थ्यं तस्मादिति, उपचारे संबन्ध उक्तः ।

२ अधिकारचिन्तामिति । अङ्गिनि निरूपितेऽङ्गानां निरूपणमुचितमिति संगतिः ।

३ पदं हीति । अयमर्थः—'आधानोद्धरणे तावद्यावद्दोलायते मनः' इत्युक्तनीत्या किमपि पदं काव्यबन्धे प्रयोगयोग्यं पुनः पुनश्चेतसि विनिवेशयन्कविरभिधानकोशपरिशीलनमन्तरेण संदिग्धार्थतया प्रयोक्तुं परित्यक्तुं वा नोत्सहते ।

यदि प्रयुक्तं प्रयुज्यते तर्हि किमिति संदिग्धार्थत्वमाशङ्कितं पदस्य । तत्र । तत्र सामान्येनार्थावगतिः संभवति[1]। यथा नीवीशब्देन जघनवस्त्रग्रन्थि-रुच्यत इति कस्यचिन्निश्चयः। स्त्रिया वा पुरुषस्य वेति संशयो 'नीवी संग्रथने नार्या जघनस्थस्य वाससः' इति नाममालाप्रतीकमपश्यत इति। अथ कथम्।

'केनचित्पूर्वमुक्तोऽपि नीवीबन्धः श्लथीकृतः ।
विचित्रभोजनाभोगवर्धमानोदरादिना ॥'

इति प्रयोगः । भ्रान्तेरुपचाराद्वा ।

**छन्दोविचितेर्वृत्तसंशयच्छेदः ॥ ६ ॥**

काव्याभ्यासाद्वृत्तसंक्रान्तिर्भवत्येव । किं तु मात्रावृत्तादिषु[2] क्वचित्संशयः स्यात् । अतो वृत्तसंशयच्छेदश्छन्दोविचितेर्विधेय इति ।

**कलाशास्त्रेभ्यः ॥ ७ ॥**

कलाः[3] गीतनृत्यचित्रादिकास्तासामभिधायकानि शास्त्राणि विशाखिलादि-प्रणीतानि कलाशास्त्राणि । तेभ्यः कलातत्त्वस्य संवित्संवेदनम् । नहि कला-तत्त्वानुपलब्धौ कलावस्तु सम्यङ्निबद्धुं शक्यमिति।

---

१ सामान्येनेति । 'एषा हि मे रणगतस्य दृढा प्रतिज्ञा द्रक्ष्यन्ति यन्न रिपवो जघनं हयानाम्' इति प्रयोगदर्शनात् जघनशब्दः पृष्ठवंशाधरत्रिकमात्रमभिधत्त इत्य-भिमन्यमानस्य कस्यचिन्नीवीशब्दो जघनवस्त्रग्रन्थिमभिधत्त इति प्रतिपत्तिर्जायते ! तच्च स्त्रिया वा पुरुषस्य वेति संशय उपपद्यत इत्यर्थः ।

२ तथापि मात्रावृत्तादिषु मात्राकल्प्येषु वैतालीयादिषु छन्दःशास्त्रं विना निर्णयो दुष्कर इत्यर्थः । वैतालीयलक्षणं तु वृत्तरत्नकारे, 'षड्विषमेऽष्टौ (व) समे कला-स्ताश्च समे स्युर्नो निरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः' इति।

३ कला नृत्यगीतादयश्चतुःषष्टिः । उपकलाश्चतुःशतम् । कलानामुद्देशः कृतो भामहेन—

' नृत्तं गीतं तथा वाद्यमालेख्यं मणिभूमिकाः। दशनाद्यङ्गरागश्च माल्यगुम्फविचित्रता।
वेणुवीणादिकालापपाटवं शेखरक्रिया। नेपथ्यं गन्धयुक्तिश्च कर्णपत्रक्रियाभिधा।
विशेषभेद्यक्लृप्तिश्च नानाभूषणयोजनम्। इन्द्रजालं कौचिमारं सामुद्रं हस्तलाघवम्।
सूचीवानक्रिया सूत्रक्रिया सलिलवाद्यकम्। सूदशास्त्रपरिज्ञानं शारिकाशुकवादनम्।
रसवादो वास्तुविद्या तक्षणं मेचिकोत्करः। सजीवनिर्जीवद्यूतशास्त्रसंपाद्यपाटवम्।
धारणा मातृकायन्त्रं मातृकाकाव्यलक्षणम्। आकर्षकक्रीडितं च निमित्तागमवेदनम्।
अभ्यम्बुसेनादिस्तम्भो विषप्रातिविषागमः। पाञ्चालीनृत्तकरणं तण्डुलादिबलिक्रिया।

**कामशास्त्रतः कामोपचारस्य ॥ ८ ॥**

संविदित्यनुवर्तते। कामोपचारस्य संवित्कामशास्त्रत इति। कामोपचारबहुलं हि वस्तु काव्यस्येति।

**दण्डनीतेर्नयापनययोः ॥ ९ ॥**

दण्डनीतेरर्थशास्त्रान्नयस्यापनयस्य च संविदिति तत्र षाड्गुण्यस्य[1] यथावत्प्रयोगो नयः। तद्विपरीतोऽपनयः। नहि तावविज्ञाय नायकप्रतिनायकयोर्वृत्तं शक्यं काव्ये निबद्धुमिति।

**इतिवृत्तकुटिलत्वं च ततः ॥ १० ॥**

इतिहासादिरितिवृत्तं काव्यशरीरम्। तस्य कुटिलत्वं[2] ततो दण्डनीतेर्बलीयस्त्वादिप्रयोगो व्युत्पत्तिमूलतत्वात्तस्याः। एवमन्यासामपि[3] विद्यानां यथास्वमुपयोगो वर्णनीय इति।

**लक्ष्यज्ञत्वमभियोगो वृद्धसेवावेक्षणं प्रतिभानमवधानं च प्रकीर्णम् ॥ ११ ॥**

**तत्र काव्यपरिचयो लक्ष्यज्ञत्वम् ॥ १२ ॥**

अन्येषां काव्येषु परिचयो लक्ष्यज्ञत्वम्। ततो हि काव्यबन्धस्य व्युत्पत्तिर्भवति ॥

---

प्रहेलिका दुर्वचकप्रतिमायादियोजनम्। मन्त्रवादपरिज्ञानं विशीर्णाक्षरमुष्टिका।
सर्वाभिधानकोशोक्तिः परकायप्रवेशनम्। जयव्यायामचित्रात्तिपत्रिकाचित्रकर्तनम्।
रत्नोत्पत्तिस्थानशास्त्रं दर्पणादिलिपिक्रिया। तिरस्करिण्याद्यावाप्तिपुष्पशाटकिकागमः।
हस्त्यश्वलक्षणज्ञानं तिर्यग्वृदयवेदनम्। परेङ्गितपरिज्ञानं जलयानागमज्ञता।
परचेतःप्रवेशश्च चतुःषष्टिरिमाः कलाः। अन्या उपकलाः प्रोक्तास्तासां संख्याचतुःशतम्।
आभिरेव प्रपञ्चोऽयं वर्तते विजयी स्फुटम्' इति।

१ षाड्गुण्यस्येति। संधिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः।

२ कुटिलत्वमिति। यथा तापसवत्सराजादौ। आवलीयसेति। अबलीयांसमधिकृत्य कृतमधिकरणमाबलीयसम्, तत्प्रभृतौ प्रयोगाः भिन्नभेदसुहृल्लाभादयः तेषां व्युत्पत्तौ सा दण्डनीतिर्मूलमिति भावः।

३ एवमन्यासामिती। एवमष्टादशभेदभिन्नानामशेषाणामपि विद्यानां काव्याङ्गत्वमुक्तं भवति। तासामुपयोगश्च यथास्वं लब्धवर्णैर्द्रष्टव्यः। यथाहुः,
'न स शब्दो न तद्वाच्यं न सा विद्या न सा कला। जायते यन्न काव्याङ्गमहो भारो गुरुः कवेः॥' इति।

**काव्यबन्धोद्यमोऽभियोगः ॥ १३ ॥**

[1]काव्यस्य बन्धनं रचना काव्यबन्धः । तत्रोद्यमोऽभियोगः। स हि कवित्वप्रकर्षमवसंदधाति ।

**काव्योपदेशगुरुशुश्रूषणं वृद्धसेवा ॥ १४ ॥**

काव्योपदेशे गुरव उपदेष्टारः । तेषां शुश्रूषणं वृद्धसेवा । ततः काव्यविद्यायाः संक्रान्तिर्भवति ।

**पदाधानोद्धरणमवेक्षणम् ॥ १५ ॥**

पदस्या[2]धानं न्यासः । उद्धरणमपसारणम् । तयोः खल्ववेक्षणम् ।

अत्र श्लोकौ—

'आधानोद्धरणे तावद्यावद्दोलायते मनः ।
पदस्य स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥
यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥'

**कवित्वबीजं प्रतिभानम् ॥ १६ ॥**

[3]कवित्वस्य बीजं कवित्वबीजं जन्मान्तरागतसंस्कारविशेषः कश्चित् । यस्माद्बीजं विना काव्यं न निष्पद्यते । निष्पन्नं वावहास्यायतनं स्या[4]त् ।

---

१ पूर्वं कथापरीक्षा, तत्राधिकावापोद्वापौ, फलपर्यन्ततानयनम्, रसं प्रति जागरूकता. रसोचितविभावादिवर्णनायामलंकारौचित्यमित्याद्युल्लेखपूर्वकं गुम्फनं काव्यबन्धः।

२ पदाधानेति । अत्र भामहेन भणितं प्रमाणयति—आधानोद्धरणे इति । श्लोकद्वयेन क्रमादन्वयव्यतिरेकाभ्यां पदानां स्थैर्यं संपादनीयमित्युक्तम् । इत्थमर्थपाकोऽपि समर्थनीयः ।

३ यदाह भट्टगोपालः, 'कवित्वस्य लोकोत्तरवर्णनानैपुणलक्षणस्य, बीजमुपादानस्थानीयः, संस्कारविशेषः कार्यकल्पनीया काचिद्वासना शक्तिः' इति । काव्यादर्शेऽपि 'न विद्यते यद्यपि पूर्ववासना गुणानुबन्धि प्रतिभानमद्भुतम् ।' इति ।

४ तदुक्तम्. । 'नाकवित्वमधर्माय मृतये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥' इति ।

**चित्तैकाग्र्यमवधानम् ॥ १७ ॥**

चित्तस्यैकाग्र्यं बाह्यार्थनिवृत्तिः । तदवधानम् । अविहितं हि चित्त-मर्थान्पश्यति ।

**तद्देशकालाभ्याम् ॥ १८ ॥**

तदवधानं देशात्कालाच्च समुत्पद्यते ।

कौ पुनर्देशकालावित्याह—

**विविक्तो देशः ॥ १९ ॥**

विविक्तो निर्जनः ।

**रात्रियामस्तुरीयः कालः ॥ २० ॥**

रात्रेर्यामो रात्रियामः [1]प्रहरस्तुरीयश्चतुर्थः काल इति । तद्वशाद्विष-योपरतं प्रसन्नं चित्तमवधत्ते ।

एवं काव्याङ्गान्युपदर्श्य काव्यविशेषकथनार्थमाह—

**काव्यं गद्यं पद्यं च ॥ २१ ॥**

गद्यस्य पूर्वं निर्देशो दुर्लक्ष्यविषयत्वेन दुर्बन्धत्वात् । यथाहुः—'गद्यं कवीनां निकषं वदन्ति' ।

त[3]च्च त्रिधा भिन्नमिति दर्शयितुमाह—

**गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च ॥ २२ ॥**

---

१ तुरीय इति । प्रथमादिषु त्रिषु प्रहरेष्वाहारनिद्रासु सांमुख्यं मनसः । पश्चिमे तु प्रहरे प्रसादः संभवतीति तुरीय इत्युक्तम् ।

२ तथा च कालिदासः, 'पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ।' इति। माघोऽपि 'गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ।' इति।

३ तच्चेति । वृत्तगन्धि क्वचिद्भागे वृत्तच्छायानुकारि । चूर्णपदेनोपचारात् व्यस्तपदसमाहारो लक्ष्यते । तेन व्यस्तपदबहुलं चूर्णम् । उत्कलिकाप्रायमिति । उत्कलिका उत्कण्ठा । 'उत्कण्ठोत्कलिके समे' इत्यमरः । उत्कलिकायाः प्रायः प्रयोगबाहुल्यं यस्मिंस्तत् उत्कलिकाप्रायं गद्यम् । यस्मिन् श्रूयमाणे श्रोतॄणामुत्कण्ठा बहुला भवतीत्यर्थः । यद्वा कलिकाशब्दोऽत्र लक्षणया रुहरुहिकायां वर्तते । उल्लसन्तीं कलिकां रुहरुहिकां प्रैति प्राप्नोतीत्युत्कलिकाप्रायम् । यत्र पदसंदर्भपरिपाटी काण्डोप-काण्डसंरोहशालिनी कलिकेवोल्लसति, तदुत्कलिकाप्रायमित्यर्थः ।

तल्लक्षणान्याह—

**पद्यभागवद्वृत्तगन्धि ॥ २३ ॥**

पद्यस्य भागाः पद्यभागास्तद्वृत्तगन्धि ।

यथा—'पातालतालुतलवासिषु दानवेषु' इति ।

अत्र हि वसन्ततिलकाख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते ।

**अनाविद्धललितपदं चूर्णम् ॥ २४ ॥**

अनाविद्धान्यदीर्घसमासानि ललितान्यनुद्धतानि पदानि यस्मिंस्तदनाविद्धललितपदं चूर्णमिति ।

यथा—'अभ्यासो हि कर्मणां कौशलमावहति । नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति' ।

**विपरीतमुत्कलिकाप्रायम् ॥ २५ ॥**

विपरीतमाविद्धोद्धतपदमुत्कलिकाप्रायम् ।

यथा—'कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' इति ।

**पद्यमनेकभेदम् ॥ २६ ॥**

पद्यं खल्वनेकेन [1]समार्धसमविषमादिना भिन्नं भवति ।

**तदनिबद्धं निबद्धं च ॥ २७ ॥**

तदिदं गद्यपद्यरूपं काव्यमनिबद्धं निबद्धं च । अनयोः प्रसिद्धत्वाल्लक्षणं नोक्तम् ।

---

१ समेति । समवृत्तमर्धसमवृत्तं विषमवृत्तम् । आदिशब्देनार्यावैतालीयादिमात्रावृत्तानां परिग्रहः । समवृत्तादिलक्षणमुक्तं भामहेन, 'सममर्धसमं वृत्तं विषमं च त्रिधा मतम् । अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः । तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते । प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् । द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते । यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् । तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥' इति ।

२ अनयोः प्रसिद्धत्वादिति । अनिबद्धं मुक्तकं निबद्धं प्रबन्धरूपमिति प्रसिद्धिः । मुक्तकलक्षणमुक्तं भामहेन, 'प्रथमं मुक्तकादीनामृजु लक्षणमुच्यते । यदेव गाम्भीर्यौदार्यशौर्यनीतिमतिस्पृशा । भवेन्मुक्तकमेकेन द्विकं द्वाभ्यां त्रिकं त्रिभिः ॥' इति । निबद्धानि सर्गबन्धादीनि । तल्लक्षणं काव्यादर्शे, 'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्' इत्यादिना द्रष्टव्यम् ॥

**क्रमसिद्धिस्तयोः स्रगुत्तंसवत् ॥ २८ ॥**

तयोरित्यनिबद्धं निबद्धं च परामृश्यते। क्रमेण सिद्धिः क्रमसिद्धिः। अनिबद्धसिद्धौ निबद्धसिद्धिः स्रगुत्तंसवत्। यथा स्रजि मालायां सिद्धायामुत्तंसः शेखरः सिध्यतीति।

केचिदनिबद्ध एव पर्यवसितास्तद्दूषणार्थमाह-

**नानिबद्धं चकास्त्येकतेजःपरमाणुवत् ॥ २९ ॥**

न खल्वनिबद्धं काव्यं चकास्ति दीप्यते। यथैकतेजः परमाणुरिति।

अत्र श्लोकः-

'असंकलितरूपाणां काव्यानां नास्ति चारुता।
न प्रत्येकं प्रकाशन्ते तैजसाः परमाणवः॥

**संदर्भेषु दशरूपकं श्रेयः ॥ ३० ॥**

[1]संदर्भेषु प्रबन्धेषु दशरूपकं नाटकादि श्रेयः।

कस्मात्तदाह-

**तद्धि चित्रं चित्रपटवद्विशेषसाकल्यात् ॥ ३१ ॥**

तद्दशरूपकं हि यस्माच्चित्रं चित्रपटवत्। विशेषाणां साकल्यात्।

**ततोऽन्यभेदक्लृप्तिः ॥ ३२ ॥**

ततो दशरूपकादन्येषां भेदानां क्लृप्तिः कल्पनमिति। दशरूपकस्यैव हीदं सर्वं विलसितम्। यच्च कथाख्यायिके महाकाव्यमिति तल्लक्षणं च नातीव हृदयंगमित्युपेक्षितमस्माभिः। तदन्यतो ग्राह्यम्।

इति काव्यालंकारसूत्रवृत्तौ प्रथमेऽधिकरणे काव्याङ्गानि काव्यविशेषाश्च नाम तृतीयोऽध्यायः।

## समाप्तं चेदं शारीरं नाम प्रथममधिकरणम्।

---

१ निबद्धेषु, तरतमभावं निरूपयति—संदर्भेष्विति। रूपकस्वरूपं निरूपितं दशरूपके, 'अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते। रूपकं तत्समारोपाद्दशधैव रसाश्रयम्॥' इति॥ भावप्रकाशेऽपि 'रूपकं तद्भवेद्रूपं दृश्यत्वात्प्रेक्षकैरिदम्। रूपकत्वं तदारोपात्कमलारोपवन्मुखे॥' इति। दश रूपकाणि तु, 'नाटकं सप्रकरणं भाणः प्रहसनं डिमः। व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश॥' इति।

## दोषदर्शनं नाम द्वितीयमधिकरणम् ।

### पदार्थदोषविभागो नाम प्रथमोऽध्यायः ।

काव्यशरीरे स्थापिते काव्यसौन्दर्याक्षेपहेतवस्त्यागाय दोषा विज्ञातव्या इति दोषदर्शनं नामाधिकरणमारभ्यते ।

दोषस्वरूपकथनार्थमाह—

**गुणविपर्ययात्मानो दोषाः ॥ १ ॥**

गुणानां वक्ष्यमाणानां ये विपर्ययास्तदात्मानो दोषाः ।

**अर्थतस्तदवगमः ॥ २ ॥**

गुणस्वरूपनिरूपणात्तेषां दोषाणामर्थादवगमोऽर्थसिद्धिः ।

किमर्थं ते पृथक्प्रपञ्च्यन्त इत्याह—

**सौकर्याय प्रपञ्चः ॥३॥**

सौकर्यार्थं प्रपञ्चो विस्तारो दोषाणाम् । उद्दिष्टलक्षणा हि दोषाः सुज्ञाता भवन्ति ।

पददोषान्दर्शयितुमाह—

**[1]दुष्टं पदमसाधु कष्टं ग्राम्यमप्रतीतमनर्थकं च ॥ ४ ॥**

क्रमेण व्याख्यातुमाह—

**शब्दस्मृतिविरुद्धमसाधु ॥ ५ ॥**

शब्दस्मृत्या व्याकरणेन विरुद्धं पदमसाधु । यथा—'अन्यकारकवैयर्थ्यम्' इति । अत्र हि 'अषष्ठ्यतृतीयास्थानस्य दुगाशीराशास्थानस्थितोत्सुकोतिकारकरागच्छेषु' इति दुका भवितव्यमिति ।

**श्रुतिविरसं कष्टम् ॥ ६ ॥**

श्रुतिविरसं श्रोत्रकटुपदं कष्टम् । तद्धि रचनागुम्फितमप्युद्वेजयति । यथा—

'[2]अचूचुरच्चण्डिकपोलयोस्ते कान्तिद्रवं द्राग्विशदः शशाङ्कः ।'

---

१ दुष्टं पदमिति प्रत्येकं संबन्धनीयम् ।

२ अचूचुरदिति । अत्र द्रागिति पदं कष्टम् ।

**लोकमात्रप्रयुक्तं ग्राम्यम् ॥ ७ ॥**

लोक एव यत्प्रयुक्तं पदं न शास्त्रे तद्ग्राम्यम् । यथा—'कष्ट कथ रोदिति फूत्कृतेयम्' । अन्यदपि तल्लगल्लादिकं द्रष्टव्यम् ।

**शास्त्रमात्रप्रयुक्तमप्रतीतम् ॥ ८ ॥**

शास्त्र एव प्रयुक्तं यन्न लोके तदप्रतीतं पदम् । यथा—

किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः ।
गुणानन्तरीयकं च प्रेमेति न मेऽस्त्युपालम्भः ॥'

अत्र रूपस्कन्धान्तरीयकौ न लोक इत्यप्रतीतम् ।

**पूरणार्थमनर्थकम् ॥ ९ ॥**

पूरणमात्रप्रयोजनमव्ययपदमनर्थकम् । दण्डापूपन्यायेन पदमन्यदप्यनर्थकमेव । यथा—

'उदितस्तु हास्तिकविनीलमयं तिमिरं निपीय किरणैः सविता ।'

अत्र तुशब्दस्य पादपूरणार्थमेव प्रयोगः न वाक्यालंकारार्थम् । वाक्यालंकारप्रयोजनं तु नानर्थकम् । अपवादार्थमिदम् । यथा—

'न खल्विह गतागता नयनगोचरं मे गता' इति ।

तथा हि खलु हन्तेति ।

संप्रति पदार्थदोषानाह—

---

१ कष्टमिति । अत्र फूत्कृतेति पदं ग्राम्यम्, तस्य काव्ये प्राचुर्येण प्रयोगादर्शनात् । 'ताम्बूलभृतगल्लोऽयं तल्लं जल्पति मानवः' इत्यादौ यत् तल्लगल्लादिपदं प्रयुज्यते, तदपि ग्राम्यं द्रष्टव्यम् । तल्लशब्दस्तडागवाचकः ।

२ किं भाषितेनेति । इयं हि कस्याश्चिद्विप्रलब्धायाः शठनायकं प्रत्युक्तिः । रूपविज्ञानवेदनासंज्ञासंस्कारलक्षणाः पञ्च स्कन्धाः सौगतमते प्रसिद्धाः । अत्र विषयेन्द्रियलक्षणस्य रूपस्कन्धस्य गुणा मे न सन्ति । गुणनान्तरीयकम्, अन्तरशब्दोऽत्र विनार्थः ।

३ दण्डापूपेति । दण्डप्रोता अपूपा दण्डापूपाः । तथा च दण्डानयनप्रेरणायां दण्डानयनेनैवापूपानयने सिद्धे पुनरपूपानयनप्रेरणं व्यर्थमिति दण्डापूपन्यायः । अथवा, अपूपदण्डो मूषकैर्भक्षित इत्युक्ते पुनरपूपभक्षणप्रश्नवचनं व्यर्थमिति दण्डापूपन्यायः ।

**अन्यार्थनेयगूढार्थाश्लीलक्लिष्टानि च ॥ १० ॥**

दुष्टं पदमित्यनुवर्तते । अर्थतश्च वचनविपरिणामः । अन्यार्थादीनि पदानि दुष्टानीति सूत्रार्थः ।

एषां क्रमेण लक्षणान्याह—

**रूढिच्युतमन्यार्थम् ॥ ११ ॥**

रूढिषु च्युतं रूढिमनपेक्ष्य यौगिकार्थमात्रोपादानादन्यार्थं पदम् । स्थूलत्वात्सामान्येन घटशब्दः पटशब्दार्थ इत्यादिकमन्यार्थं नोक्तम् । यथा—

'ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसंगमानाम् ।'

अत्रावहतिः करोत्यर्थो धारणार्थप्रयुक्तः, प्रस्मरतिर्विस्मरणार्थः प्रकृष्टस्मरण इति ।

**कल्पितार्थं नेयार्थम् ॥ १२ ॥**

अश्रुतस्याप्यन्यस्य[१] पदार्थस्य कल्पनात्कल्पितार्थं नेयार्थम् । यथा—

'सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥'

अत्र विहंगमश्चक्रवाकोऽभिप्रेतः । तन्नामानि चक्राणि । तानि बिभ्रतीति विहंगमनामभृतो रथाः । पङ्क्तिरिति दशसंख्या लक्ष्यते । पङ्क्तिर्दश विहंगमनामभृतो रथा यस्य स पङ्क्तिविहंगमनामभृद्दशरथः । तस्य तनयाभ्यां रामलक्ष्मणाभ्यां संवलितं प्लवगसैन्यं जितम् । उलूकजिता इन्द्रजिता । कौशीकशब्देनेन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक

---

१ अश्रौतस्येति । संकेतसहायः शब्दव्यापारः, तद्विशिष्टः शब्दो वा श्रुतिः । तत आगतोऽर्थः श्रौतः, स न भवतीति अश्रौतः अनभिधेय इत्यर्थः । नन्विदमश्रौतत्वमर्थस्य किं लाक्षणिकत्वम् ? नेत्याह—उन्नेयस्येति । 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इत्येवंलक्षणलक्षणाकक्ष्यामधिक्षिप्य कस्यचिदर्थस्य कल्पने कल्पितार्थम्, न तु लाक्षणिकार्थमित्यर्थः ।

उक्तः। ननु चैवं रथाङ्गनामादीनामपि प्रयोगोऽनुपपन्नः। न। तेषां निरूढलक्षणत्वात्।

**अप्रसिद्धार्थप्रयुक्तं गूढार्थम् ॥ १३ ॥**

यस्य पदस्य लोकेऽर्थः प्रसिद्धश्चाप्रसिद्धश्च तदप्रसिद्धेऽर्थे प्रयुक्तं गूढार्थम्।

यथा—

सहस्रगोरिवानीकं दुःसहं भवतः परैः' इति।

सहस्रं गावोऽक्षीणि यस्य स सहस्रगुरिन्द्रः। तस्येवेति गोशब्दस्याक्षिवाचित्वं कविष्वप्रसिद्धमिति।

**असभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम् ॥ १४ ॥**

यस्य पदस्यानेकार्थस्यैकोऽर्थोऽसभ्यः स्यात्तदसभ्यार्थान्तरम्।

यथा—'वर्चः' इति पदं तेजसि विष्ठायां च।

यत्तु पदमेकदेशद्वारेणासभ्यार्थं स्मारयति तदसभ्यस्मृतिहेतुः।

यथा—'कृकाटीका' इति।

**न गुप्तलक्षितसंवृतानि ॥ १५ ॥**

---

१ नन्विति। रथाङ्गनामादीनामित्यादिपदेन रथाङ्गपाणिप्रभृतीनां परिग्रहः। रथाङ्गनामादिपदानां चक्रवाकादौ निरूढत्वेन रूढ्या योगस्य निगीर्णत्वान्न काचिदनुपपत्तिरिति परिहरति—नेति। निरूढा लक्षणा येषामिति बहुव्रीहिः। लक्षणा हि रूढिप्रयोजनवशात् द्विविधा भवति। तत्र रूढलक्षणाः कुशलादयः शब्दाः प्रयोगप्राचुर्यबलेन वाचकशब्दवत्प्रयुज्यन्ते। प्रयोजनलक्षणास्तु 'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षणम्' इत्यादौ विकसितादयः शब्दाः स्मितविलासादिलक्षकतयाद्यापि प्रयुज्यन्ते। तदुक्तम्

'निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः॥' इति।

२ कृकाटिकेति। 'प्रेतयानं खटिः काटिः' इति वैजयन्त्यां शवयानपर्यायत्वेनाभिधानात् कण्ठापरभागवाचकमपि कृकाटिकापदं काटीत्येकदेशेनासभ्यार्थस्मृतिहेतुरित्यश्लीलमित्याभिप्रायः।

अपवादार्थमिदम् । गुप्तं लक्षितं संवृतं च नाश्लीलम् ।

एषां लक्षणान्याह—

**अप्रसिद्धासभ्यं गुप्तम् ॥ १६ ॥**

अप्रसिद्धासभ्यार्थान्तरं पदमप्रसिद्धासभ्यम् । तद्गुप्तम् । यथा—

'[1]संबाधः' इति पदम् । तद्धि संकटार्थं प्रसिद्धम्, न गुह्यार्थमिति ।

**लाक्षणिकासभ्यान्वितं लक्षितम् ॥ १७ ॥**

तदेवासभ्यार्थान्तरं लाक्षणिकेनासभ्येनार्थेनान्वितं पदं लक्षितम् ।

यथा—'जन्मभूमिः' इति ।

तद्धि लक्षणया गुह्यार्थम्, न स्वशक्त्येति ।

**लोकसंवीतं संवृतम् ॥ १८ ॥**

लोकेन[2] संवीतं लोकसंवीतं यत्तत्संवृतम् । यथा—'सुभगा' 'भगिनी,'[3] 'उपस्थानम्' 'अभिप्रेतम्' 'कुमारी' 'दोहदम्' इति ।

अत्र हि श्लोकः—

संवीतस्य हि लोकेन न दोषान्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना ॥

**त्रैविध्यम् । व्रीडाजुगुप्सामङ्गलातङ्कदायिभेदात् ॥ १९ ॥**

तस्याश्लीलस्य त्रैविध्यं भवति । व्रीडाजुगुप्सामङ्गलातङ्कदायिनां[4] भेदात् । किंचिद्व्रीडादायि[5] भवति । यथा—'वाक्चाटवम्' 'हिरण्यरेताः' इति ।

---

१ संबाध इति । 'लेशेऽपि गन्धः संबाधो गुह्यसंकटयोर्द्वयोः ।' इत्यभिधाने सत्यपि 'संबाधे सुरभीणाम्' 'आसने मित्रसंबाधे' इत्यादिषु प्रयोगप्राचुर्यात् संबाधशब्दः संकटार्थः प्रसिद्धः ; तदभावात् गुह्यार्थोऽप्रसिद्ध इत्यर्थः ।

२ लोकेन संवीतम् आवृतं परिगृहीतमित्यर्थः ।

३ तदुक्तं दाण्डिना, 'भगिनीभगवत्यादि सर्वत्रैवानुमन्यते ।'

४ दायिशब्दः प्रत्येकमभिसंबध्यते ।

५ तत्राद्यमुदाहर्तुमाह—किंचिदिति । वाक्काटवमिति । कटोर्भावः काटवम्, वाचः काटवं वचस्तैक्ष्ण्यमित्यर्थः । अत्र काट इत्येकदेशेन लिङ्गप्रतीतेर्व्रीडादायि, 'काटश्चार्णवश्च' इत्यत्र मन्त्रभाष्ये तथा दर्शनात् । द्वितीयं दर्शयितुमाह—किंचिदिति । पर्दः पायवीयपवनध्वनिः । 'पर्दस्तु गुदजेशब्दे कुर्दः कुक्षिजनिःस्वने' इति वैजयन्ती अवशिष्टमश्लीलं स्पष्टयति— किंचिदिति । 'प्रमीतः संस्थितो मृतः ' इत्यमरः ।

किंचिज्जुगुप्सादायि भवति । यथा 'कपर्दकः' इति। किंचिदमङ्गलातङ्कदायि भवति । यथा ' संस्थितः ' इति ।

**व्यवहितार्थप्रत्ययं क्लिष्टम् ॥ २०**

अर्थस्य प्रतीतिरर्थप्रत्ययः । स व्यवहितो यस्माद्भवति तद्व्यवहितार्थ-प्रत्ययं क्लिष्टम् । यथा-

' दक्षात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ॥ '

दक्षात्मजास्ताराः । तासां दयितो दक्षात्मजादयितश्चन्द्रः । तस्य वल्लभाश्चन्द्रकान्ताः । तद्वेदिकानामिति । अत्र हि व्यवधानेनार्थप्रत्ययः ।

**अरूढार्थत्वात् ॥ २१ ॥**

अरूढार्थत्वेऽपि यतोऽर्थप्रत्ययो झटिति न, तत्क्लिष्टम् यथा-
' काञ्चीगुणस्थानमनिन्दितायाः ' इति ।

**अन्त्याभ्यां वाक्यं व्याख्यातम् ॥ २२ ॥**

अश्लीलं क्लिष्टं चेत्यन्त्ये पदे । ताभ्यां वाक्यं व्याख्यातम् । तदप्यश्लीलं क्लिष्टं च भवति । अश्लीलं यथा-[1]

---

१ अश्लीलं वाक्यमपि त्रिविधम्; तत्र व्रीडादायि अश्लीलमुदाहरति-- **यथेति** । सा तादृशी ! धनोन्नतिः अर्थसंपत्तिः । न भवति । या कलत्ररतिदायिनी, कलत्रस्य रतिं प्रीतिं दातुं शीलमस्या इति कलत्ररतिदायिनी, न तु परप्रीतिदायिनी यस्मात्; तस्मात् परार्थबद्धकक्ष्याणां परेषामर्थे प्रयोजने बद्धा कक्ष्या कच्छो यैस्तेषां परोपकारबद्धप्रतिज्ञानामित्यर्थः । ' कक्ष्या कच्छे वरत्रायाम् ' इति वैजयन्ती । धनम् अर्थः । यत्सत्यं परमार्थतः । पेलवं मनोज्ञमिति प्रकृतार्थः । अर्थान्तरं तु--साधनस्य शेफस उन्नतिः । ' साधनमुपगमनत्योः शेफसि सिद्धौ निवृत्तिदापनयोः ' इति नानार्थ-माला । यस्मात् कलत्रस्य रतिं सुरतं दातुं शीलमस्या इति तादृशी न भवति; तस्मात् परासामर्थे बद्धकक्ष्याणां परस्त्रीवशंवदचित्तानामित्यर्थः । धनं पेलवं विरलं भवति । ' पेलवं विरलं तनु ' इत्यमरः । अत्र व्रीडादायित्वमतिरोहितम् । अवशिष्टमश्ली-लद्वयमुदाहरति--**सोपानेति** । सोपानपथमुत्सृज्य । वायुवेगः वायोर्वेग इव वेगो यस्य स तादृशः, समुद्यतः सन्, जनैः स्तूयमानगुणः सन्, महापथेन राजमार्गेण गतवा-निति प्रकृतार्थः । वायुवेगः अपानपथमुत्सृज्य समुद्यत इति जुगुप्सादायि । महापथेन परलोकमार्गेण गतश्चानित्यमङ्गलातङ्कदायि ।

'न सा धनोन्नतिर्या स्यात्कलत्रसुखदायिनी ।'
'परार्थबद्धकक्षाणां यत्सत्यं पेलवं धनम् ॥'
'सोपानपथमुत्सृज्य वायुवेगसमुद्धतम् ।
महापथेन गतवान्कीर्त्यमानगुणो जनैः ॥'

क्लिष्टं यथा—

[1]'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

एतान्पञ्च पदार्थदोषान्विभक्ताञ्ज्ञात्वा कविस्त्यजेदिति तात्पर्यार्थः ।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे पदपदार्थदोषविभागो नाम प्रथमोऽध्यायः ।

---

## वाक्यवाक्यार्थदोषविभागो नाम द्वितीयोऽध्यायः

इदानीं वाक्यदोषान्दर्शयितुमाह—

**भिन्नवृत्तयतिभ्रष्टविसंधीनि वाक्यानि ॥ १ ॥**

दुष्टानीत्यभिसंबन्धः ।

क्रमेण व्याचष्टे—

**स्वलक्षणच्युतवृत्तं भिन्नवृत्तम् ॥ २ ॥**

स्वस्माल्लक्षणाच्च्युतं वृत्तं यस्मिंस्तत्स्वलक्षणच्युतवृत्तं वाक्यं भिन्नवृत्तम्। यथा—'अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् । वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धम् । तच्च कृतमिति भिन्नवृत्तत्वम् ।

**विरसविरामं यतिभ्रष्टम् ॥ ३ ॥**

विरसः श्रुतिकटुर्विरामो यस्मिंस्तद्विरसविरामं यतिभ्रष्टम् ।

**तद्धातुनामभागभेदे स्वरसंध्यकृते प्रायेण ॥ ४ ॥**

---

१ धम्मिल्लस्य संयतकचनिचयस्य ।

२ अत्रान्वयव्यवधानान्त हार्दिकी वाक्यार्थप्रतिपत्तिरिति स्पष्टमेव क्लिष्टत्वम् । ननु किं फलममीषां दोषाणामवबोधनेनेत्याशङ्क्य, परित्याग एव फलमित्याह——

तद्यतिभ्रष्टं धातुभागभेदे नामभागभेदे च सति भवति। स्वरसंधीनाकृते प्रायेण बाहुल्येन। [1]धातुभागभेदे मन्दाक्रान्तायां यथा-'एतासां राजति सुमनसां दाम कण्ठावलम्बि।'

नामभागभेदे शिखरिण्यां यथा-'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः।'

मन्दाक्रान्तायां यथा-'दुर्दर्शश्चक्रशिखिकपिशः शार्ङ्गिणो बाहुदण्डः।'

धातुनामभागपदग्रहणात्तद्भागातिरिक्तभेदे न भवति यतिभ्रष्टत्वम्। यथा मन्दाक्रान्तायाम्-'शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः[2]।'

शिखरिण्यां यथा-विनिद्रः श्यामान्तेष्वधरपुटसीत्कारविरुतैः[3]।'

स्वरसंध्यकृत इति वचनात्स्वरसंधिकृते भेदे न दोषः। यथा-'किंचिद्भावालसमसरलं प्रेक्षितं सुन्दरीणाम्[4]।'

**न वृत्तदोषात्पृथग्यतिदोषः। वृत्तस्य यत्यात्मकत्वात्॥ ५॥**

वृत्तदोषात्पृथग्यतिदोषो न वक्तव्यः। वृत्तस्य यत्यात्मकत्वात्।

यत्यात्मकं हि वृत्तमिति भिन्नवृत्त एव यतिभ्रष्टस्यान्तर्भावान्न पृथग्ग्रहणं कार्यमत आह-

---

१ तत्र प्रथममुदाहर्तुमाह-धातुभागभेद इति। एतासामिति। मन्दाक्रान्ताख्यमिदं वृत्तम्। 'मन्दाक्रान्ता जलधिषडगैर्म्भौ न तौ तो गुरु चेत्' इति तल्लक्षणादादितश्चतुर्भिः, ततः षड्भिः, ततः सप्तभिर्वर्णैर्विरामः कर्तव्यः। तथा सति 'एतासां रा-' इत्यत्र धातुभागभेदे प्राप्तस्य तस्य वैरस्यादिदं वाक्यं यतिभ्रष्टं नाम दुष्टं भवति। द्वितीयमुदाहरति--नामभागभेद इति। कुरङ्गाक्षीणामिति। शिखरिणीवृत्तमिदम्। 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणादादितः षड्भिः तत एकादशभिर्यतिः कर्तव्या। ततश्च 'कुरङ्गाक्षीणां ग-' इत्यत्र प्रातिपदिकभागभेदे प्राप्तायास्तस्या वैरस्यात् यतिभ्रष्टं भवति। उदाहरणान्तरमाह-दुर्दर्श इति। मन्दाक्रान्तालक्षणमुक्तम्। 'दुर्दर्शश्च' इत्यत्र विरामो विरसः।

२ यथेति।। 'शोभां पुष्य-' इत्यत्र विरामो न वैरस्यमावहतीति भावः।

३ 'श्यामान्ते-' इत्यत्र प्रातिपदिकप्रत्ययमध्यविरामो न दुष्यति।

४ स्वरसंधीती। उदाहरति-किंचिद्भावालसमिति। अत्र चतुर्थाक्षरावसाने यतिर्विहिता। तथा च अलसमित्यत्र अकारस्य सवर्णदीर्घेणैकादेशेन कवलितत्वात्स्वरसंधिकृतोऽयं नामभागभेद इति न यतिभ्रष्टत्वम्।

**न, लक्ष्मणः पृथक्त्वात् ॥ ६ ॥**

नायं दोषः लक्ष्मणो लक्षणस्य पृथक्त्वात् । अन्यद्धि लक्षणं वृत्तस्य, अन्यद्यतेः । गुरुलघुनियमात्मकं वृत्तम् । विरामात्मिका च यतिरिति ।

**विरूपपदसंधिर्विसंधिः ॥ ७ ॥**

पदानां संधिः पदसंधिः । स च स्वरसमवायरूपः प्रत्यासत्तिमात्ररूपो वा । स विरूपो यस्मिन्निति विग्रहः ।

**पदसंधिवैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वं च ॥ ८ ॥**

विश्लेषो [1]विभागेन पदानां संस्थितिरिति । अश्लीलत्वमसभ्यस्मृतिहेतुत्वम् । कष्टत्वं पारुष्यमिति । विश्लेषो यथा—

'मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।'

'कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः ।'

'लोलालकानुबद्धानि आननानि चकासति ।'

[2]अश्लीलत्वं यथा—

---

१ **विभागेनेति** । स च विश्लेषो द्विविधः— प्रगृह्यनिबन्धनः, संध्यविवक्षानिबन्धनश्च । तत्राद्यमुदाहरति— **कमले इति** । यदवादि दण्डिना, 'न संहितां विवक्षामीत्यसंधानं पदेषु यत् । तद्विसंधीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥' इति । अत्र प्रगृह्यादिहेतुकं विसंधि न भवतीति सकृत्प्रयोगविषयमिदं द्रष्टव्यम्; असकृत्प्रयोगे तु दुष्टमेव । तदुक्तं साहित्यचूडामणौ, "प्रगृह्यादिनिबन्धनत्वे पुनरसकृद्दोषः । यथा— 'धीदोर्बले अतितते उचितार्थवृत्ती' इत्यादि । सकृत्तु न दोषः । तथाच प्रयोगः— 'लीलयैव धनुषी अधिज्यताम्' इति, 'सहसंपाते इव लक्ष्यमाणे" इति च । द्वितीयमुदाहरति— **लोलालकेत्यादि** । अत्र 'न संहितां विवक्षामि' इति कामचारप्रयुक्तः सकृदपि दोष एव, 'नित्या संहितैकपदवत्पादेष्वर्धान्तवर्जम्' इति काव्यसमयाध्याये वक्ष्यमाणत्वात् ।

२ त्रिविधमश्लीलं क्रमेणोदाहरति—

'[1]विरेचकमिदं नृत्तमाचार्याभासयोजितम् ।'

'चकासे पनसप्रायैः पुरी पण्डमहाद्रुमैः ।'

'विना शपथदानाभ्यां पदवादसमुत्सुकम् ।'[2]

कष्टत्वं यथा—'मक्षर्युद्गमगर्भास्ते गुर्वाभोगा द्रुमा बभुः ।'

एवं वाक्यदोषानभिधाय वाक्यार्थदोषान्प्रतिपादयितुमाह—

**व्यर्थैकार्थसंदिग्धाप्रयुक्तापक्रमलोकविद्याविरुद्धानि च ॥ ९ ॥**

वाक्यानि दुष्टानीति संबन्धः ।

क्रमेण व्याख्यातुमाह—

**व्याहतपूर्वोत्तरार्थं व्यर्थम् ॥ १० ॥**

व्याहतौ पूर्वोत्तरावर्थौ यस्मिंस्तद्व्याहतपूर्वोत्तरार्थं वाक्यं व्यर्थम् । यथा—'अद्यापि स्मरति रसालसं मनो मे मुग्धायाः स्मरचतुराणि चेष्टितानि ।' मुग्धायाः कथं स्मरचतुराणि चेष्टितानि । तानि चेत्कथं मुग्धा । अत्र पूर्वोत्तरयोरर्थयोर्विरोधाद्व्यर्थमिति ।

**उक्तार्थपदमेकार्थम् ॥ ११ ॥**

उक्तार्थानि पदानि यस्मिंस्तदुक्तार्थपदमेकार्थम् । यथा—'चिन्तामोहमनङ्गमङ्ग तनुते विप्रेक्षितं सुभ्रुवः ।'[3] अनङ्गः शृङ्गारः । तस्य चिन्ताया मोहात्मकत्वाच्चिन्तामोहशब्दौ प्रयुक्तावुक्तार्थौ भवतः । एकार्थपदत्वाद्वाक्यमेकार्थमित्युक्तम् ।

**न, विशेषश्चेत् ॥ १२ ॥**

---

१ रेचका नाम नृत्ते पाणिपादादिभ्रमणरूपाश्चत्वारो भरतशास्त्रे प्रसिद्धाः । तदुक्तं संगीतरत्नाकरे,

'रेचकानथ वक्ष्यामश्चतुरो भरतोदितान् ।
पदयोः करयोः कट्या ग्रीवायाश्च भवन्ति ते ॥'

इति ।

२ अत्र विरेचकयामशोषपुरीषविनाशपदविन्यासैः, विरेचनमिथुनीभावमेहनपुरीषविनाशप्रतीतेस्त्रिविधान्यश्लीलानि द्रष्टव्यानि ।

३ चिन्तामोहमिति । कामिनीकटाक्षपातकलुषितान्तःकरणस्य विरहवेदनामसहमानस्य कस्यचित्कामुकस्येयमुक्तिः ।

न गतार्थं दुष्टं विशेषश्चेत्प्रतिपाद्यः स्यात् ।

तं विशेषं प्रतिपादयितुमाह—

**धनुर्ज्याध्वनौ धनुःश्रुतिरारूढेः प्रतिपत्त्यै ॥ १३ ॥**

धनुर्ज्याध्वनावित्यत्र ज्याशब्देनोक्तार्थत्वेऽपि धनुःश्रुतिः प्रयुज्यते । आरूढेः प्रतिपत्त्यै आरोहणस्य प्रतिपत्त्यर्थम् । नहि धनुःश्रुतिमन्तरेण धनुष्यारूढा ज्या धनुर्ज्येति शक्यं प्रतिपत्तुम् । यथा—'[1]धनुर्ज्याकिणचिन्हेन दोष्णा विस्फुरितं तव ' इति ।

**कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः संनिधेः ॥ १४ ॥**

कर्णावतंसादिशब्देषु कर्णादीनामवतंसादिपदैरुक्तार्थानामपि निर्देशः संनिधेः प्रतिपत्त्यर्थमिति संबन्धः । नहि कर्णादिशब्दनिर्देशमन्तरेण कर्णादिसंनिहितानामवतंसादीनां शक्या प्रतिपत्तिः कर्तुमिति । यथा—' दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम् ' ।

' लीलाचलच्छ्रवणकुण्डलमापतन्ति । '

' आययुर्भृङ्गमुखरशिरःशेखरशालिनः । '

**मुक्ताहारशब्दे मुक्ताशब्दः शुद्धेः ॥ १५ ॥**

मुक्ताहारशब्दे मुक्ताशब्दो हारशब्देनैव गतार्थः प्रयुज्यते शुद्धेः । प्रतिपत्त्यर्थमिति संबन्धः । शुद्धानामन्यरत्नैरमिश्रितानां हारो मुक्ताहारः । यथा—

' प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ '[2]

---

१ धनुर्ज्याकिणेति । ज्याशब्दमात्रप्रयोगे ज्याबन्धनेनापि किणसंभवात् भवेदनौचित्यम् तथा च प्रयोगः, ' ज्याबन्धनिष्पन्दभुजेन यस्य ' इति ।

२ ननु हसतीव स्तनद्वयमिति हासोत्प्रेक्षणसामर्थ्यादेव हारस्य रत्नान्तरासंवलनलक्षणा शुद्धिः प्रतीयते, न मुक्ताशब्दसंनिधानात् । अन्यथा हासोत्प्रेक्षैव नोदयमासादयेत् । अतो नेदमुदाहरणमिति चेत्, मैवम् ; हारशुद्धिप्रतिपत्त्या हासोत्प्रेक्षा हासोत्प्रेक्षया च हारशुद्धिप्रतिपत्तिरिति परस्पराश्रयप्रसङ्गात् । अतो मुक्ताशब्दसांनिधानादेव हारशुद्धिप्रतिपत्तिरिति भवत्युदाहरणमिदम् ॥

**पुष्पमालाशब्दे पुष्पपदमुत्कर्षस्य ॥ १६ ॥**

पुष्पमालाशब्दे मालाशब्देनैव गतार्थं पुष्पपदं प्रयुज्यते उत्कर्षस्य प्रतिपत्त्यर्थमिति । उत्कृष्टानां पुष्पाणां माला पुष्पमालेति । यथा—'प्रायशः पुष्पमालेव कन्या सा कं न लोभयेत् ' । ननु मालाशब्दोऽन्यत्रापि दृश्यते यथा रत्नमाला शब्दमालेति सत्यम् । उपचरितस्य प्रयोगः निरुपपदो हि मालाशब्दः पुष्परचनाविशेषमेवाभिधत्त इति ।

**करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य ॥ १७ ॥**

करिकलभशब्दे करिशब्दः कलभेनैव गतार्थः प्रयुज्यते ताद्रूप्यस्य प्रतिपत्त्यर्थमिति । करी प्रौढकुञ्जरः । तद्रूपः कलभः करिकलभ इति । यथा—'त्यज करिकलभ त्वं प्रीतिबन्धं करिण्याः । '

**विशेषणस्य च ॥ १८ ॥**

[१]विशेषणस्य विशेषप्रतिपत्त्यर्थमुक्तार्थस्य पदस्य प्रयोगः । यथा—'जगाद मधुरां वाचं विशदाक्षरशालिनीम्' ।

**[२]तदिदं प्रयुक्तेषु ॥ १९ ॥**

तदिदमुक्तं प्रयुक्तेषु नाप्रयुक्तेषु । नहि भवति यथा 'श्रवणकुण्डलम्' इति तथा 'नितम्बकाञ्ची' इत्यपि । यथा वा 'करिकलभः इति तथा 'उष्ट्रकलभः' इत्यपि ।

अत्र श्लोकः—

---

१ विशेषणस्येति । शब्दान्तरस्य संनिधानादुक्तार्थोऽपि विशेष्यशब्दः प्रयुज्यते-स च विशेषणस्य प्रतिपत्त्यै भवति । जगादेत्यनेन गतार्थस्य वाक्छब्दस्य माधुर्यवर्णवैशद्य लक्षणप्रतिपत्त्यै प्रयोग इष्यत इति वाक्यार्थः । 'जगाद मधुरोदारविशदाक्षरमीश्वरः' इति विन्यासकल्पनायां विशेषणस्य प्रयोगः क्रियाविशेषणत्वेऽप्युपपद्यते । अतः 'नीलनीरजविकासहारिणा कान्तमीक्षणयुगेन वीक्षते' इत्युदाहार्यम् ।

२ तदेतत्सार्थकत्वसमर्थनमभियुक्तप्रयुक्तपदनिर्वाहाय, न सर्वत्रेति नियन्तुमाह तदिदमिति ॥

'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
संनिधानादिबाधार्थं स्थितेष्वेतत्समर्थनम् ॥ '

[1]संशयकृत्संदिग्धम् ॥ २० ॥

यद्वाक्यं साधारणानां धर्माणां श्रुतेः, विशिष्टानां वा श्रुतेः संशयं करोति तत्संशयकृत्संदिग्धमिति ।

यथा—' स महात्मा भाग्यवशान्महापदमुपागतः । '

[2]किं भाग्यवशान्महापदमुपागत आहोस्विदभाग्यवशान्महतीमापदमिति संशयकृद्वाक्यं प्रकरणाद्यभावे सतीति ।

मायादिकल्पितार्थमप्रयुक्तम् ॥ २१ ॥

मायादिना कल्पितोऽर्थो यस्मिंस्तन्मायादिकल्पितार्थमप्रयुक्तम् । अत्र [3]स्तोकमुदाहरणम् ।

क्रमहीनार्थमपक्रमम् ॥ २२ ॥

उद्देशितानामनुद्देशितानां च क्रमः संबन्धस्तेन विहीनोऽर्थो यस्मिंस्तत्क्रमहीनार्थमपक्रमम् ।

यथा—'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ' ।

अत्र कीर्तिश्चन्द्रमसस्तुल्या प्रतापः सूर्यस्य तुल्यः । सूर्यस्य पूर्वनिपातादपक्रमः । अथवा प्रधानार्थस्य निर्देशः क्रमः तेन विहीनोऽर्थो यस्मिंस्तदपक्रमम् ।

यथा—'तुरंगमथ मातङ्गं प्रयच्छास्मै मदालसम् ।'

---

१ इत्थं कार्थं समर्थ्य, संदिग्धं समर्थयितुमाह—संशयकृत्संदिग्धमिति

२ किं भाग्यवशादिति । लक्षणं विशिनष्टि प्रकरणादिति । अत्रादिपदेन संयोगादयो गृह्यन्ते । यथोक्तं हरिणा—
' संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्यसंनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इति ।

३ अस्तोकमुदाहरणमिति । विवृतं हि विदग्धमुखमण्डने,
' प्राहुर्व्यस्तं समस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ।
तथा व्यस्तसमस्तं च द्विर्व्यस्तकसमस्तके ॥ '
इत्यादिना ।

**देशकालस्वभावविरुद्धार्थानि लोकविरुद्धानि ॥ २३ ॥**

देशकालस्वभावैर्विरुद्धोऽर्थो येषु तानि देशकालस्वभावविरुद्धार्थानि वाक्यानि लोकविरुद्धानि । अर्थद्वारेण लोकविरुद्धत्वं वाक्यानाम् । देशविरुद्धं यथा-

'सौवीरेष्वस्ति[1] नगरी मथुरानाम विश्रुता ।
अक्षोटनालिकेराढ्या यस्याः पर्यन्तभूमयः ॥'

कालविरुद्धं यथा-'कदम्बकुसुमस्मेरं[2] मधौ वनमशोभत ।'

स्वभावविरुद्धं यथा-'मत्तालिमङ्ख[3]मुखरासु च मञ्जरीषु सप्तच्छदस्य तरतीव शरन्मुखश्रीः'[4] ।

सप्तच्छदस्य स्तवका भवन्ति न मञ्जर्य इति स्वभावविरुद्धम् ।

तथा-

'भृङ्गेण[5] कलिकाकोषस्तथा भृशमपीड्यत ।
यथा गोष्पदपूरं हि ववर्ष बहुलं मधु ॥'

---

१ यमुनातीरवर्तिन्या मथुराया नगर्याः सौवीरेषु देशेष्वसंभवात् देशविरोधः ।

२ प्रावृषि प्रसवोद्गमशालिनः कदम्बस्य वसन्ते प्रसूनप्रसङ्गासंभवात् कालविरोधः

३ मङ्खः स्तुतिपाठकः । 'नान्दीकारश्चाङ्ककारो मङ्खश्च स्तुतिपाठकः' इति वैजयन्ती ।

४ अतः सप्तच्छदस्य स्वभावतो गुच्छा एव, न तु मञ्जर्यः संभवन्तीति स्वभावविरुद्धम् ।

५ भृङ्गैर्थैरिति । कलिका कोरकः । अनुद्भिन्नमुकुला कलिका कलिकाकोशः तत्र गोष्पदपूरणपर्याप्तस्य मधुनोऽसंभवात् स्वभावविरुद्धम् । गोष्पदपूरमित्यत्र-गोः पदं प्रमाणतया अवच्छेदकमस्य वर्षस्येत्यस्मिन्नर्थे गोष्पदमिति भवति ; 'गोष्पदं सेवितासेवितप्रमाणेषु' इति गोष्पदशब्दो निपातितः । गोष्पदं पूरयित्वा ववर्ष गोष्पदपूरं ववर्ष । 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति णमुल् । लोकविरुद्धमपि क्वचित्कविसमयप्रसिद्धेः प्राबल्यान्न दुष्टम् ; यथा-

'सुसितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः॥'

इति एवमन्यत्रापि लोकयात्राकविमर्यादयोर्विप्रतिषेधे पूर्वदौर्बल्यमवगन्तव्यम् ।

कलिकायाः सर्वस्या मकरन्दस्यैतावद्बाहुल्यं स्वभावविरुद्धम् ।

**कलाचतुर्वर्गशास्त्रविरुद्धार्थानि विद्याविरुद्धानि ॥ २४ ॥**

कलाशास्त्रैश्चतुर्वर्गशास्त्रैश्च विरुद्धोऽर्थो येषु तानि कलाचतुर्वर्गशास्त्रविरुद्धार्थानि वाक्यानि विद्याविरुद्धानि । वाक्यानां विरोधोऽर्थद्वारकः ।

कलाशास्त्रविरुद्धं यथा—'कालिङ्गं लिखितमिदं वयस्य पत्रं पत्त्रज्ञैरपतित कोटिकण्टकाग्रम् । '

कालिङ्गं पतिताग्रकोटिकण्टकमिति पत्त्रविदामाम्नायः । तद्विरुद्धत्वात्कलाशास्त्रविरुद्धम् । एवं कलान्तरेष्वपि विरोधोऽभ्यूह्यः

'चतुर्वर्गशास्त्रविरुद्धानि तूदाह्रियन्ते—' कामोपभोगसाफल्यफलो राज्ञां महीजयः ' ।

धर्मफलोऽश्वमेधादियज्ञफलो वा राज्ञां महीजय इत्यागमः । तद्विरोधाद्धर्मशास्त्रविरुद्धार्थमेतद्वाक्यमिति ।

' अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया । '

द्विषज्जयस्य नयमूलत्वं स्थितं दण्डनीतौ । तद्विरोधादर्थशास्त्रविरुद्धार्थं वाक्यमिति ।

' दशनोङ्कपवित्रितोत्तरोष्ठं रतिखेदालसमाननं स्मरामि ।

---

१ धर्मार्थकाममोक्षाः चतुर्वर्गः । ' त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकः ' इत्यमरः ।

२ तत्र धर्मशास्त्रविरुद्धमुदाहरति—कामोपभोगेति ।

३ अर्थशास्त्रमत्र दण्डनीतिः । यत्र पुनरर्थकामौ प्रधानम्; लोकयात्रानुवृत्तिमात्राय धर्मः, सा दण्डनीतिः ; यस्याः भगवान् बृहस्पतिः प्रवक्ता । तद्विरुद्धमुदाहरति—अहंकारेणेति ।

४ तत् कामशास्त्रम्, यत्र त्रिवर्गस्य परस्परानुपरोधादुपयोगोपदेशः ; यस्य भगवान भार्गवः प्रणेता । कामशास्त्रविरुद्धं दर्शयति—दशनेति ।

'उत्तरोष्ठमन्तर्मुखं नयनान्तमिति मुक्त्वा चुम्बननखरदशनस्थानानि ।' इति कामशास्त्रे स्थितम् । तद्विरोधात्कामशास्त्रविरुद्धार्थं वाक्यमिति ।

'[1]देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदा ।'

एतस्यार्थस्य मोक्षशास्त्रे स्थितत्वात्तद्विरुद्धार्थम् ।

एते वाक्यवाक्यार्थदोषास्त्यागाय ज्ञातव्याः । ये त्वन्ये शब्दार्थदोषाः सूक्ष्मास्ते गुणविवेचन एवोच्यन्ते । उपमादोषाश्चोपमाविचार इति ।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे वाक्यवाक्यार्थदोषविभागो नाम द्वितीयोऽध्यायः ।

## समाप्तं चेदं दोषदर्शनं द्वितीयमधिकरणम् ।

---

## गुणविवेचनं नाम तृतीयमधिकरणम् ।

### गुणालंकारविवेकः शब्दगुणविवेकश्च नाम प्रथमोऽध्यायः ।

यद्विपर्ययात्मनो दोषास्तान्गुणान्विचारयितुं गुणविवेचनमधिकरणमारभ्यते—

तत्रौजः प्रसादादयो गुणाः, यमकोपमादयस्त्वलंकारा इति स्थितिः काव्यविदाम् । तेषां किं भेदनिबन्धनमित्याह—

**काव्यशोभायाः कर्तारो धर्मा गुणाः ॥ १ ॥**

ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः । ते चौजः प्रसा-

१ मोक्षशास्त्रविरुद्धमुदाहरति—देवताभक्तित इति । विरोधं व्युत्पादयति—एतस्येति । 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥'. इत्युक्तनीत्या या ज्ञानलक्षणा भक्तिः, सात्र न विवक्षिता ; किंत्वार्तत्वादिप्रयुक्ता त्रिरूपा ; ज्ञानरूपायास्तु भक्तेर्मोक्षो भवत्येव । तदुक्तं तत्रैव—'ज्ञानी त्वात्मैव मे मतम् ।' इति । अतः 'न तत्त्वज्ञानसंपदा' इत्येतत् 'ज्ञानादेव तु कैवल्यम्' इत्यादिमोक्षशास्त्रविरुद्धम् ।

दादयः। न यमकोपमादयः। [1]कैवल्येन तेषामकाव्यशोभाकरत्वात्। ओजः प्रसादादीनां तु केवलानामस्ति काव्यशोभाकरत्वमिति।

**तदतिशयहेतवस्त्वलंकाराः ॥ २ ॥**

तस्याः काव्यशोभाया अतिशयस्तदतिशयस्तस्य हेतवः। तुशब्दो व्यतिरेके। अलंकाराश्च यमकोपमादयः।

अत्र श्लोकौ—

'युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।
'विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः ॥
'यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥'

**पूर्वे नित्याः ॥ ३ ॥**

पूर्वे गुणा नित्याः। तैर्विना काव्यशोभानुपपत्तेः।

एवं गुणालंकाराणां भेदं दर्शयित्वा शब्दगुणनिरूपणार्थमाह—

**ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः ॥ ४ ॥**

बन्धः पदरचना। तस्य गुणा बन्धगुणा ओजःप्रभृतयः।

तान्[2]क्रमेण दर्शयितुमाह—

**गाढबन्धत्वमोजः ॥ ५ ॥**

---

१ कैवल्य इति। तेषामलंकाराणां कैवल्ये गुणसाहचर्याभावे काव्यशोभाकलनाक्षमत्वादित्यर्थः।

२ तान् क्रमेणेति। बन्धस्य पदरचनायाः गाढत्वं कनकशलाकावयवघटनवन्निबिडत्वम्। तत्र हेतवः—संयुक्ताक्षरत्वम्, निरन्तररेफशिरस्कैर्वर्गाणां प्रथमद्वितीयैस्तृतीयचतुर्थैः प्रथमैस्तृतीयैश्च संयोगाः, विसर्जनीयजिह्वामूलीयोपध्मानीयाः, गुर्वन्तता, समासाश्च, इत्येवमादयस्तरतमभावेनावस्थिताः।

बन्धस्य गाढत्वं यत्तदोजः ।

यथा—'विलुलितमकरन्दा मञ्जरीर्नर्तयन्ति'। न पुनः, 'विलुलितमधुधारा मञ्जरीर्लोलयन्ति'।

**शैथिल्यं प्रसादः ॥ ६ ॥**

बन्धस्य शैथिल्यं शिथिलत्वं प्रसादः ।

नन्वयमोजोविपर्ययात्मा दोषः, तत्कथं गुण इत्याह--

**गुणः संप्लवात् ॥ ७ ॥**

गुणः प्रसादः । ओजसा सह संप्लवात् ।

**न शुद्धः ॥ ८ ॥**

स शुद्धस्तु दोष एवेति ।

ननु विरुद्धयोरोजःप्रसादयोः कथं संप्लव इत्याह—

**स त्वनुभवसिद्धः ॥ ९ ॥**

स तु संप्लवस्त्वनुभवसिद्धः तद्विदां रत्नादिविशेषवत् ।

अत्र श्लोकः—

'करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः' ॥

**[1]साम्योत्कर्षौ च ॥ १० ॥**

साम्यमुत्कर्षश्चौजःप्रसादयोरेव ।

साम्यं यथा—'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे नृपतिककुदं दत्त्वा यूने सितातपवारणम्'। रघुवंश ३.७०.

---

१ साम्योत्कर्षौ चेति । क्रमेण त्रिविधं प्रसादमुदाहृत्य दर्शयति—साम्यं यथेति । 'विषयव्यावृत्तात्मा—' इत्यादावोजः; 'यथाविधि सूनवे' इत्यादौ प्रसादः । भिन्नदेशयोरप्योजःप्रसादयोः परस्परच्छायानुकारितया संप्लवः । उभयोरत्र साम्यं वेदितव्यम् । ओजसः प्रसादादुत्कर्षमुदाहरति—अजतीति । भल्लातकी नाम वीरवृक्षः । 'वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु' इत्यमरः । 'कुसुमशयनम्' इत्यत्र प्रसादस्योत्कर्षो द्रष्टव्यः ।

क्वचिदोजः प्रसादादुत्कृष्टम् । यथा—'व्रजति गगनं भल्लातक्याः फलेन सहोपमाम् '।

क्वचिदोजसः प्रसादस्योत्कर्षः । यथा—'कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः'। विक्रमोर्वशीयम् ३.१०

**मसृणत्वं श्लेषः ॥ ११ ॥**

मसृणत्वं नाम यस्मिन्सति बहून्यपि पदान्येकवद्भासन्ते ।

यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः'। कु.सं.१.१ न पुनः, 'सूत्रं [1]ब्राह्ममुरःस्थले—', 'भ्रमरीवल्गुगीतयः', 'तडित्कलिलमाकाशं' इति। एवं तु श्लेषो भवति—'ब्राह्मं सूत्रमुरःस्थले','भ्रमरीमञ्जुगीतयः', 'तडिज्जटिलमाकाशं' इति ।

**[2]मार्गाभेदः समता ॥ १२ ॥**

मार्गस्याभेदो मार्गाभेदः समता । येन मार्गेणोपक्रमस्तस्यात्याग इत्यर्थः । श्लोके प्रबन्धे चेति । पूर्वोक्त[3]मुदाहरणम् । विपर्यय[4]स्तु यथा—

'प्रसीद चण्डि ! त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः ।
किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्तविलासमास्यते ॥'

**आरोहावरोहक्रमः समाधिः ॥ १३ ॥**

[5]आरोहावरोहयोः क्रम आरोहावरोहक्रमः समाधिः परिहारः । आरोहस्यावरोहे सति परिहारः, अवरोहस्य वा आरोहे सतीति ।

---

१ सूत्र ब्राह्ममित्यत्र परसवर्णेऽपि परुषाक्षरोत्थानान्न श्लेषः ।

२ समतां समाख्यातुमाह—मार्गाभेद इति । आदिमध्यावसानेष्वैकरूप्यं समतेत्यर्थः ।

३ पूर्वोक्तमिति । अस्त्युत्तरस्यामित्यादि ।

४ विपर्ययस्त्विवति । प्रसीद त्यजेति कर्तृवाचितया प्रक्रान्तस्य मार्गस्य आस्यत इत्यत्र त्यागान्न समता ।

५ दीर्घादिगुर्वक्षरप्राचुर्ये आरोहः । लघ्वादिशिथिलप्रायत्वे चावरोह इति द्रष्टव्यम् ।

'तत्रारोहपूर्वोऽवरोहो यथा—'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे'। अवरोहपूर्वस्त्वारोहो यथा—'नरोः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः'।

आरोहस्य क्रमोऽवरोहस्य च क्रम आरोहावरोहक्रमः क्रमेणारोहणमवरोहणं चेति केचित्।

यथा—'निवेशः स्वःसिन्धोस्तुहिनगिरिवीथीषु जयति।'

**न पृथक्, आरोहावरोहयोरोजःप्रसादरूपत्वात् ॥ १४ ॥**

न पृथक्समाधिर्गुणः। आरोहावरोहयोरोजःप्रसादरूपत्वात्। ओजोरूपश्चारोहः प्रसादरूपश्चावरोह इति।

**न, संपृक्तत्वात् ॥ १५ ॥**

यदुक्तमोजःप्रसादरूपत्वमारोहावरोहयोस्तन्न। संपृक्तत्वात् संपृक्तौ खल्वोजःप्रसादौ नदीवेणिकावद्वहतः।

**अनैकान्त्याच्च ॥ १६ ॥**

न चायमेकान्तः यदोजस्यारोहः, प्रसादे चावरोह इति।

**ओजःप्रसादयोः क्वचिद्भागे तीव्रावस्थायां ताविति चेदभ्युपगमः ॥ १७ ॥**

ओजःप्रसादयोःक्वचिद्भागे तीव्रावस्थायामारोहोऽवरोहश्चेत्येवं चेन्मन्यसे, अभ्युपगमः न विप्रतिपत्तिः।

---

१ तत्राद्यमुदाहरति—आरोहपूर्वक इति। 'निरानन्दः कौन्दे' इत्यत्र गुर्वक्षरबाहुल्यादारोहः। मधुनीत्यत्र लघ्वक्षरप्राचुर्यादवरोहः। द्वितीयमुदाहरति—अवरोहपूर्वक इति।

२ नरा इत्यत्र शैथिल्यादवरोहः। शीलभ्रष्टा इत्यत्र गुर्वक्षरप्रचुरत्वादारोहः। अस्यैव लक्षणवाक्यस्यान्यैरभिहितमर्थमभ्यनुजिज्ञासुरनुवदति—आरोहस्य क्रमइति। निःश्रेणिकारोहावरोहन्यायेन क्रमेणारोहणम्, क्रमेण चावरोहणमिति लक्षणवाक्यार्थः। उदाहरति—

३ निवेश इति। 'निवेशः स्वःसिन्धोः' इत्यत्र निःश्रेणिकाक्रमेणारोहः। 'तुहिनगिरि—' इत्यत्रावरोहः।

**[1]विशेषापेक्षत्वात्तयोः ॥ १८ ॥**

स विशेषो गुणान्तरात्मा ।

**आरोहावरोहनिमित्तं समाधिराख्यायते ॥ १९ ॥**

आरोहावरोहक्रमः समाधिरिति गौण्या वृत्त्या व्याख्येयम् ।

**[2]क्रमविधानार्थत्वाद्वा ॥ २० ॥**

पृथक्करणमिति । पाठधर्मत्वं च न संभवतीति ‘ न पाठधर्माः सर्वत्रादृष्टेः’ इत्यत्र वक्ष्यामः ।

**पृथक्पदत्वं माधुर्यम् ॥ २१ ॥**

बन्धस्य पृथक्पदत्वं यत्तन्माधुर्यम् । पृथक् पदानि यस्य स पृथक्पदः तस्य भावः पृथक्पदत्वम् । समासदैर्घ्यविनिवृत्तिपरं चैतत् । पूर्वोक्तमुदाहरणम्[3] ।

विपर्ययस्तु[4] यथा—‘ चलितशबरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः ।’

---

१ परोक्तस्याभ्युपगमे पर्यवसितमर्थं समर्थयितुमाह—विशेषेति । विशेषः तीव्रावस्थात्मा, तमपेक्षितुं शीलमनयोरिति विशेषापेक्षिणौ तयोर्भावस्तत्त्वं तस्मात् । आरोहावरोहाभ्यामोजः प्रसादयोस्तीव्रावस्था हि स्वनिमित्तत्वेनापेक्षिता । सोऽयमोजःप्रसादव्यतिरेकेण समाधिरन्यो गुण इति सूत्रार्थः ।

२ ननु अवस्था पुनरवस्थावतो यदा न भिद्यते, तदा तीव्रावस्था ओजःप्रसादात्मिकैव भवति । यद्यपि यद्यत् ओजः, तत्तत् आरोह इति नास्ति नियमः, तथापि यो य आरोहः, तत्तत् ओज इति भवति । ततः सत्यं न समाधिना प्रसादः स्वीक्रियते, प्रसादेन च समाधिः संगृह्यत एवेति किमर्थमस्योपादानमित्यत आह— क्रमविधानार्थं वेति । नात्र क्रमः परस्परम्; अपि तु क्रमेणारोहणं क्रमेणावरोहणमित्येवंरूपः क्रमो ज्ञेयः । नन्वारोहावरोहक्रमः पाठधर्मः किं न स्यादिति चोद्यं वक्ष्यमाणयुक्त्या विघटितमित्याह— पाठधर्मश्चेति ।

३ पूर्वोक्तमिति । ‘ अस्त्युत्तरस्याम् ’ इत्याद्युदाहरणम् ।

४ विपर्ययस्त्विति । समासपददैर्घ्यं तु विपर्ययः ।

**अजरठत्वं सौकुमार्यम् ॥ २२ ॥**

बन्धस्याजरठत्वमपारुष्यं यत्तत्सौकुमार्यम्। पूर्वोक्तमुदाहरणम्[1]।

विपर्ययस्तु यथा—'निदानं निर्द्वन्द्वं प्रियजनसदृक्त्वव्यवसितिः सुधासेकप्लोषौ फलमपि विरुद्धं मम हृदि।'[2]

**विकटत्वमुदारता ॥ २३ ॥**

बन्धस्य विकटत्वं यदसावुदारता। यस्मिन्सति नृत्यन्तीव पदानीति जनस्य वर्णना भवति तद्विकटत्वम्। लीलायमानत्वमित्यर्थः। यथा—'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झटिति रणितमासीत्तत्र चित्रं कलं च।' न पुनः, 'चरणकमललग्नैर्नूपुरैर्नर्तकीनां झटिति रणितमासीन्मञ्जु चित्रं च तत्र।'

**अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ॥ २४ ॥**

यत्र झटित्यर्थप्रतिपत्तिहेतुत्वं स गुणोऽर्थव्यक्तिरिति। पूर्वोक्तमुदाहरणम्[3]। प्रत्युदाहरणं तु भूयः सुलभं च।

**औज्ज्वल्यं कान्तिः ॥ २५ ॥**[4]

बन्धस्योज्ज्वलत्वं नाम यदसौ कान्तिरिति। यदभावे पुराणच्छायेत्युच्यते।

यथा—'कुरङ्गीनेत्रालीस्तबकितवनालीपरिसरः।' विपर्ययस्तु भूयान्सुलभश्च।

श्लोकाश्चात्र भवन्ति—

'पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः।
अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम्॥

---

१ पूर्वोक्तमिति। 'अस्त्युत्तरस्याम्' इत्याद्युदाहरणम्।

२ प्रत्युदाहरणमाह—विपर्ययस्त्विति। सौकुमार्यस्य विपर्ययः कष्टत्वभिन्नवृत्तत्वे।

३ पूर्वोक्तम् 'अस्त्युत्तरस्याम्' इति। सुलभं चेति। 'सपदि पङ्क्तिविहङ्गमनाम' इत्यादि।

४ कान्तिं कथयितुमाह—औज्ज्वल्यमिति। पत्रमिति वक्तव्ये किसलयमित्यादि, जलधाविति वक्तव्ये अधिजलधीति, रात्रीति वक्तव्ये रजनीति कमलमिवेति वक्तव्ये कमलायत इत्यादिः कान्तिहेतुः।

श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते ।
अनेन न विना सत्यं स्वदते काव्यपद्धतिः ॥
यत्रैकपदवद्भावः पदानां भूयसामपि ।
अनालक्षितसंधीनां स श्लेषः परमो गुणः ॥
प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥
आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥
बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।
अनेन हि पदन्यासाः कामं धारामधुश्च्युतः ॥
यथा हि च्छिद्यते रेखा चतुरं चित्रपण्डितैः ।
तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता ॥'
बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् ।
एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः ।
विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।
वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः ॥
पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ।
यत्रार्थव्यक्तिहेतुत्वात्सोऽर्थव्यक्तिः स्मृतो गुणः ॥
औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः ।
पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः ॥

**[1]नासन्तः, सद्वेद्यत्वात् ॥ २६ ॥**

न खल्वेते गुणा असन्तः । सद्वेद्यत्वात् ।

---

१ नन्वेते गुणाः स्वसंकल्पनामात्रसाराः, रूपरसादिवदपरोक्षतया अधिगन्तुमशक्यत्वादिति शङ्कामुट्टङ्कयितुमाह—नासन्त इति । अयमर्थः—ओजःप्रमुखा एते गुणाः, असन्तः तुच्छा न भवन्ति । कुतः ? संवेद्यत्वात् । सहृदयसंवेदनस्य विषयत्वात् ।

तद्विदां सद्वेद्यत्वेऽपि भ्रान्ताः स्युरित्याह—

**न भ्रान्ताः, निष्कम्पत्वात् ॥ २७ ॥**

न गुणा भ्रान्ताः । एतद्विषयायाः प्रवृत्तेर्निष्कम्पत्वात् ।

**न पाठधर्माः, सर्वत्रादृष्टेः ॥ २८ ॥**

नैते गुणाः पाठधर्माः । सर्वत्रादृष्टेः । यदि पाठधर्माः स्युस्तर्हि विशेषानपेक्षाः सन्तः सर्वत्र दृश्येरन् । न च सर्वत्र दृश्यन्ते । विशेषापेक्षया विशेषाणां गुणत्वाद्गुणाभ्युपगम एवेति ।

इति काव्यालंकारसूत्रवृत्तौ गुणविवेचने तृतीयेऽधिकरणे गुणालंकारविवेकः शब्दगुणविवेकश्च नाम प्रथमोऽध्यायः ।

---

अर्थगुणविवेचनं नाम द्वितीयोऽध्यायः ।

संप्रत्यर्थगुणविवेचनार्थमाह—

**त एवार्थगुणाः ॥ १ ॥**

त एवौजःप्रभृतयोऽर्थगुणाः ।

शब्दार्थगुणानां [1]वाच्यवाचकद्वारेण भेदं दर्शयति—

**अर्थस्य प्रौढिरोजः ॥ २ ॥**

अर्थस्याभिधेयस्य प्रौढिः प्रौढत्वमोजः ।

'पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्यासससमासौ च साभिप्रायत्वमस्य च ॥'

पदार्थे वाक्यवचनं यथा—'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।'

अत्र चन्द्रपदवाच्येऽर्थे 'नयनसमुत्थं ज्योतिरत्रेः' इति वाक्यं प्रयुक्तम् । पदसमूहश्च वाक्यमभिप्रेतम् । अनया दिशान्यदपि द्रष्टव्यम् ।

---

१ शब्दगुणा एव चेदर्थगुणाः, किमनेन विधान्तरविधानव्यसनेन, लक्षितत्वात्तेषामित्याशङ्क्य, शब्दार्थगुणानां नामतो भेदाभावेऽपि शब्दार्थोपश्लेषवशादस्ति भेद इत्याह—

२ प्रौढिं पद्येन पञ्चधा प्रपञ्चयति—पदार्थ इति

तद्यथा—

‘ पुरः पाण्डुच्छायं तदनु कपिलिम्ना कृतपदं
ततः पाकोत्सेकादरुणगुणसंसर्गितवपुः ।
शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं
वने वीतामोदं बदरमरसत्वं कलयति ’ ॥

न चैवमतिप्रसङ्गः । काव्यशोभाकरत्वस्य गुणसामान्यलक्षणस्यावस्थितत्वात् ।

वाक्यार्थे पदाभिधानं यथा—‘ दिव्येयं न भवति किं तु मानुषी ’ इति वक्तव्ये ‘ निमिषति ’ इत्याहेति ।

अस्य वाक्यार्थस्य व्याससमासौ । व्यासो यथा—

‘ अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति न भवत्येव च ततः ।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि त-
त्पुनस्तस्मादूर्ध्वं भवति न च दुःखं न च सुखम् ।

समासो यथा—

‘ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः’॥ कुमारसंभव ६.९४

---

१ अत्र कपिलमिति वक्तव्ये ‘कपिलिम्ना कृतपदम्’ इति, शुष्कमिति वक्तव्ये ‘शनैःशोषारम्भे’ इत्यादि च वाक्यं प्रयुक्तमिति पदार्थे वाक्यरचना ।

२ द्वितीयां प्रौढिं द्रढयति—वाक्यार्थ इति । किमियं देव्युत मानुषीति पृष्टः कश्चिदुत्तरमाह—निमिषतीति । अनेन मानुषधर्मवाचिना पदेन—देवीयं न भवति, किं तर्हि, मानुषी—इति वाक्यार्थः प्रतिपादितो भवति ।

३ अस्य वाक्यार्थस्येति । व्यासमुदाहरति—अयं नानाकार इति । अयम् अविसंवादितया अनुभूयमानः दुखदुःखव्यतिकरः, नानाकारो विचित्ररूपो भवतीति वाक्यार्थः। अस्यैव विस्तरः ‘सुखं वा दुःखं वा’ इत्यादिना कृत इति व्यासः । समासं समुन्मेषयति—ते हिमालयमिती । अत्र संक्षेपः स्फुटः ।

[१]साभिप्रायत्वं यथा—

'सोऽयं संप्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा।
जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः' ॥

आश्रयः कृतधियामित्यस्य च सुबन्धुसाचिव्योपक्षेपपरत्वात्साभिप्रायत्वम्। एतेन, 'रतिविगलितबन्धे केशपाशे सुकेश्याः' इत्यत्र सुकेश्या इत्यस्य च साभिप्रायत्वं व्याख्यातम्।

**अर्थवैमल्यं प्रसादः ॥ ३ ॥**

अर्थस्य वैमल्यं प्रयोजकमात्रपरिग्रहः प्रसादः।

यथा—'सवर्णा कन्यका रूपयौवनारम्भशालिनी'।

विपर्ययस्तु—'उपास्तां हस्तो मे विमलमणिकाञ्चीपदमिदम्'।

काञ्चीपदमित्यनेनैव नितम्बस्य लक्षितत्वाद्विशेषणस्याप्रयोजकत्वमिति।

**घटना श्लेषः ॥ ४ ॥**

क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो घटना। स श्लेषः।

यथा—

'दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥' अमरुशतक १९.

शूद्रकादिरचितेषु प्रबन्धेष्वस्य भूयान्प्रपञ्चो दृश्यते।

**अवैषम्यं समता ॥ ५ ॥**

अवैषम्यं प्रक्रमाभेदः समता। क्वचित्क्रमोऽपि भिद्यते। यथा—

---

१ पञ्चमीं प्रौढिं प्रपञ्चयति—साभिप्रायत्वमिति। पदान्तरप्रयोगमन्तरेण तदर्थप्रत्यायनप्रागल्भ्यं साभिप्रायत्वम्।

२ प्रयोजकमात्रपदपरिग्रह इति। विवक्षितार्थसमर्पकपदमात्रप्रयोगेऽर्थस्य यद्वैमल्यं स प्रसादः।

' च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥'

औचित्यविचारचर्चा ५.२.

ऋतुसंधिप्रतिपादनपरेऽत्र द्वितीये पादे क्रमभेदो मलयमरुतामसाधारणत्वात् । एवं तु द्वितीयः पादः पठितव्यः । 'मनसि च गिरं बध्नन्तीमे किरन्ति न कोकिलाः' इति ।

**सुगमत्वं वा अवैषम्यमिति ॥ ६ ॥**

सुखेन गम्यते ज्ञायत इत्यर्थः ।

यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा' इत्यादि* । प्रत्युदाहरणं सुलभम् ।

**[1]अर्थदृष्टिः समाधिः ॥ ७ ॥**

अर्थस्य दर्शनं दृष्टिः । समाधानकारणत्वात्समाधिः । अवहितं चित्तमर्थान्पश्यन्तीत्युक्तं पुरस्तात् ।

**अर्थो द्विविधः, अयोनिरन्यच्छायायोनिर्वा ॥ ८ ॥**

यस्यार्थस्य दर्शनं समाधिः सोऽर्थो द्विविधः—अयोनिः, अन्यच्छायायोनिर्वेति । अयोनिरनन्यकारणः । अवधानमात्रकारण इत्यर्थः । अन्यस्य काव्यस्य च्छाया अन्यच्छाया तद्योनिर्वा । तद्यथा—

'अश्वपेहि मम सीधुभाजनाद्यावदग्रदशनैर्न दश्यसे ।
चन्द्र मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ॥'

---

'* केषु चित्पुस्तकेष्विदं पद्यं अधिकं दृश्यते ।
का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम्' ॥ शाकुंतल ५.१४.

१ अर्थदृष्टिरिति । ननु समाधिरवधानम्, दर्शनं तु ज्ञानविशेषः । कथमुभयोः सामानाधिकरण्यमित्यत आह—समाधिकारणत्वादिति । समाधिः कारणं यस्येति बहुव्रीहिः । कार्यकारणयोरुभयोरभेदमुपचर्योक्तमित्यर्थः—कार्यकारणभावमेव ज्ञापयति ।

२ अयोनिरकारण इति । कथमसति कारणमात्रे कार्योत्पत्तिरित्याशङ्क्य कवित्वबीजप्रतिभोन्मेषप्रयोजकमवधानमेवात्र कारणमित्यवगमयितुं नञा प्रसिद्धकारणं प्रतिषिध्यत इत्याह—

'मा भैः शशाङ्क मम सीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि।
प्रायो विदग्धवनितानवसंगमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम्॥'

पूर्वस्य श्लोकस्यार्थोऽयोनिः, द्वितीयस्य च च्छायायोनिरिति।

**अर्थो व्यक्तः सूक्ष्मश्च॥ ९॥**

यस्यार्थस्य दर्शनं समाधिरिति स द्वेधा—व्यक्तः सूक्ष्मश्च। व्यक्तः स्फुट उदाहृत एव। सूक्ष्मं व्याख्यातुमाह—

**सूक्ष्मो भाव्यो वासनीयश्च॥ १०॥**

सूक्ष्मो द्वेधा भवति—भाव्यो वासनीयश्च। शीघ्रनिरूपणागम्यो भाव्यः। एकाग्रताप्रकर्षगम्यो वासनीय इति। [1]भाव्यो यथा—

'अन्योन्यसंमिलितमांसलदन्तकान्ति
सोल्लासमाविरलसंवलितार्धतारम्।
लीलागृहे प्रतिकलं किलकिञ्चितेषु
व्यावर्तमानविनयं मिथुनं चकास्ति॥'

[2]वासनीयो यथा—

---

१ 'अत्र मिथुनमालम्बनाविभावः। लिलागृहमुद्दीपनविभावः। अधरास्वादाङ्कक्लमास्मितकम्पनयनव्यावर्तनभ्रूभेदादयोऽनुभावाः। उल्लासोन्मीलितहर्षौत्सुक्यादयःकिलिकिञ्चिताक्षिप्तक्रोधशोकभयगर्वाश्च संचारिणः। इत्थं विभावानुभावसंचारिभिरास्वादनीयतामापाद्यमानो रतिलक्षणः स्थायी भावःसाधारण्येन चर्व्यमाणैकप्राणः संभोगशृङ्गारो रसः। तदुक्तं दशरूपके,'

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वादुत्वं स्थायी भावो रसःस्मृतः॥'

इति। वासनीयमुद्भासयति।

२ वासनीय इति। अवहित्थेति। अवहित्थमाकारगोपनम्। दुर्लभस्त्वत्संभोगः, त्वय्येव लग्नमिदं मदीयं मनः, दुरन्तसंतापशान्तये हारलतिकेयमेका मयि दाक्षिण्यमवलम्बत इत्येवं स्वाभिप्रायप्रकाशनमवधानप्रकर्षेणात्र सहृदयहृदयसंवेद्यम्। अत्र विप्रलम्भशृङ्गारः। विभावादयः स्वयमूह्याः। अस्य गुणस्य विपर्ययो ग्राम्यत्वम् 'स्वपिति यावत्' इत्यादौ द्रष्टव्यम्।

'अवहित्थवलितजघनं विवर्तिताभिमुखकुचतटं स्थित्वा ।
अवलोकितो ऽहमनया दक्षिणकरकलितहारलतम् ॥'

**उक्तिवैचित्र्यं माधुर्यम् ॥ ११ ॥**

उक्तेर्वैचित्र्यं यत्तन्माधुर्यमिति । यथा—

' रसवदमृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु 'स्यात्प्रियादशनच्छदात्' ॥

शारङ्गधरपद्धतिः ३३१२.

**अपारुष्यं सौकुमार्यम् ॥ १२ ॥**

परुषेऽर्थेऽपारुष्यं सौकुमार्यमिति ।

यथा मृतं यशःशेष इत्याहुः । एकाकिनं देवताद्वितीयमिति । गच्छेति साधयेति च ।

**अग्राम्यत्वमुदारता ॥ १३ ॥**

ग्राम्यत्वप्रसङ्गेऽग्राम्यत्वमुदारता । यथा—

' त्वमेवंसौन्दर्या स च रुचिरतायां परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।

---

१ नानाविधोपमानातिशायि दशनच्छदमाधुर्यमिति वक्तव्ये,रसवदमृतमित्यादिभङ्ग्यन्तरेण प्रतिपादनादत्रमाधुर्यम् ।

२ अग्राम्यत्वमिति । अत्र कन्ये कामयमानं कान्तं कामयस्वेति वक्तव्ये ग्राम्या यदौचित्येन प्रतिपादनं सा उदारता । त्वमेवमिति । एवं वर्णनापथोत्तीर्णतयानुभूयमा सौन्दर्यं यस्याः सा तथोक्ता । स च माधवो रुचिरतायां सौन्दर्यविषये, परिचित संस्तुतः, प्रसिद्ध इति यावत् । युवां स च त्वं च । युवामेव परमिह लोके कलानां सीमा भजथः । अयि हे मालति । वां युवयोः द्वन्द्वं मिथुनं दिष्ट्या भाग्येन संवदति सद भवतीत्यर्थः । अतःशेषं पाणिग्रहणरूपं मङ्गलं कर्म स्याच्चेत्, तदानीं गुणितया गुण वत्त्वेन जितम्, युवयोर्गुणसंपत्तिर्विश्वातिशायिनी भवेदित्यर्थः । अत्र प्रथमं त्वं स चेति पृथक्तयोक्तेः, ततो युवामिति मिश्रीकरणेन, तदनन्तरं द्वन्द्वमिति, ततः शेषमिति च विवक्षितार्थव्यञ्जनमुखेन फलपर्यवसायित्वमित्यौचित्यशालिना क्रमेण कामन्दक्या मालती मुद्दिश्योक्तमिति स्पष्टमुदाहरणत्वम् ।

अपि द्वन्द्वं दिष्ट्या तादिति सुभगे संवदति वा-
मतः शेषं चेत्स्याज्जितमिह तदानीं गुणितया' ॥

मालतीमाधवम्

विपर्ययस्तु—

'स्वपिति यावदयं निकटे 'जनः स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥'

**वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ॥ १४ ॥**

वस्तूनां भावानां स्वभावस्य स्फुटत्वं यदसावर्थव्यक्तिः । यथा—

'पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रुबहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य' ॥

यथा वा—

'प्रथममलसैः पर्यस्ताग्रैः स्थितं पृथुकेसरै-
र्विरलविरलैरन्तःपत्रैर्मनाङ्मिलितं ततः ।
तदनु वलनामात्रं किंचिद्व्यधायि बहिर्दलै-
र्मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना' ॥

**दीप्तरसत्वं कान्तिः ॥ १५ ॥**

दीप्ता रसाः शृङ्गारादयो यस्य स दीप्तरसः, तस्य भावो दीप्तरसत्वं कान्तिः । यथा—

'प्रेयान्सायमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटलसन्नीवीनितम्बं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः' ॥

---

१ स्वपीतीति । अत्र कश्चित् कामी वयस्याय रहस्यं कथयति ।

२ प्रेयानिति । अत्र विप्रलम्भपूर्वकः संभोगशृङ्गारः ।

१एवं रसान्तरेष्वप्युदाहरणीयमिति ।

---

१ एवं रसान्तरेष्विति । शृङ्गारो द्विविधः—संभोगो विप्रलम्भश्च । तत्राद्यः परस्परावलोकनपरिचुम्बनाद्यनन्तभेदादपरिच्छेद्यः । तत्रैको भेद उदाहृतः । विप्रलम्भस्तु परस्पराभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः । तत्राद्यो यथा—

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्-
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रोलयः' ॥

एवमन्येऽपि विप्रलम्भभेदा ज्ञातव्याः । वीरो यथा—

'क्षुद्राः संत्रासमेते विजहित हरयो भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधाति परममी सायकाः संपतन्तः
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषो नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि' ॥

करुणो यथा—

'हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो
धिक् प्राणान्पतितोऽशनिर्हुतवहो गात्रेषु दग्धे दृशौ ।
इत्थं गद्गदकण्ठरुद्धकरुणाः पौराङ्गनानां गिरः-
चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि' ॥

अद्भुतो यथा—

'चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गी ।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः' ॥

हास्यो यथा—

'आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रहितसीत्कमदात्प्रहारं हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥'

भयानको यथा—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभिया भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति'॥ शाकुंतल १.७

रौद्रो यथा—

'एतत्करालकरवालनिकृत्तकण्ठनालोच्चलद्बहुलबुद्बुदफेनिलौघैः ।
सार्धं डमड्डमरुडात्कृतिहूतभूतवर्गेण भर्गगृहिणीं रुधिरैर्धिनोमि' ॥

अत्र श्लोकाः—

''गुणस्फुटत्वसाकल्यं काव्यपाकं प्रचक्षते ।
चूतस्य परिणामेन स चायमुपमीयते ॥
सुप्तिङ्संस्कारमात्रं यत्क्लिष्टवस्तुगुणं भवेत् ।
काव्यं वृन्ताकपाकं तज्जुगुप्सन्ते जनास्ततः ॥
गुणानां दर्शनान्मुक्तो यस्यार्थस्तदपार्थकम् ।
दाडिमानि दशेत्यादि न विचारक्षमं वचः ॥'

इति काव्यालंकारसूत्रवृत्तौ गुणविवेचने तृतीयेऽधिकरणे अर्थगुणविवेचनं नाम द्वितीयोऽध्यायः ।

## समाप्तं चेदं गुणविवेचनं तृतीयमधिकरणम् ।

---

## आलंकारिकं नाम चतुर्थमधिकरणम् ।

### शब्दालंकारविचारो नाम प्रथमोऽध्यायः ।

गुणनिर्वृत्या काव्यशोभा । तस्याश्चातिशयहेतवोऽलंकाराः । तन्निरूपणार्थमालंकारिकमधिकरणमारभ्यते—

तत्र शब्दालंकारौ द्वौ यमकानुप्रासौ क्रमेण दर्शयितुमाह—

**पदमनेकार्थमक्षरं चावृत्तं स्थाननियमे यमकम् ॥ १ ॥**

पदमनेकार्थं भिन्नार्थमेकमनेकं वा तस्य तद्वदक्षरमावृत्तं स्थाननियमे सति

---

बीभत्सो यथा—

' उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपीठाद्यवयवजटिलान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कात्
अस्थिसंधिस्थपुटगतमपि क्रव्यमव्यग्रमत्ति ' ॥

शान्तो यथा—

' अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ' ॥

१ इत्थमर्थगुणान् समर्थ्य काव्यस्य गुणस्फुटत्वसाकल्याभ्यां तदभावेन चोपादेयत्वानुपादेयत्वे सदृष्टान्तमाचष्टे ॥

यमकम् । स्वावृत्त्या सजातीयेन वा कात्स्न्यैकदेशाभ्यामनेकपादव्याप्तिः स्थाननियम इति । यानि त्वेकपादभागवृत्तीनि यमकानि दृश्यन्ते तेषु श्लोकान्तरस्य संस्थानं यमकापेक्षयैव स्थाननियम इति ।

स्थानकथनार्थमाह—

**पादाः पादस्यैकस्यानेकस्य चादिमध्यान्तभागाः स्थानानि॥२॥**

[1]पादाः एकस्य च पादस्यादिमध्यान्तभागाः, अनेकस्य च पादस्य त एव स्थानानि । पादयमकं यथा—

'असज्जनवचो यस्य कलिकामधुगर्हितम् ।
तस्य न स्याद्विषतरोः कलिकामधु गर्हितम् ॥'

एकपादस्यादिमध्यान्तयमकानि[2] यथा—

'हन्त हन्तररातीनां धीरधीरर्चिता तव ।
कामं कामन्दकी नीतिरस्या रस्या दिवानिशम् ॥'

'वसुपरासु परासुमिवोज्झतीष्वविकलं विकलङ्कशशिप्रभम् ।
प्रियतमं यतमन्तमनीश्वरं रसिकता सिकतास्विव तासु का ॥'

'सुदृशोऽवसरे चकितं चकितं भवतीक्षितमस्ति मितं स्तिमितम् ।
अपि हासलवस्तव कः स्तबकस्तुलयेन्न तु कामधुरां मधुराम् ॥'

पादयोरादिमध्यान्तयमकानि[3] यथा—

'भ्रमर द्रुमपुष्पाणि भ्रम रत्यै पिबन्मधु ।
का कुन्दकुसुमे प्रीतिः काकुं दत्त्वा विरौषि यत् ॥'

---

१ पाद इति । आत्रयं विभागः—प्रथमपादो द्वितीये तृतीये चतुर्थे क्रमेण यम्यते । एवं द्वितीयस्तृतीये चतुर्थे च । तृतीयश्चतुर्थे । तथा प्रथमो द्वितीयादिषु त्रिषु युगपद्यम्यत इति सप्तधा भवति । प्रथमो द्वितीये तृतीयश्चतुर्थे, प्रथमश्चतुर्थे द्वितीयस्तृतीये, इति द्वौ भेदाविति पादयमकं नवधा । पादस्य त्रेधा विभागपक्षे प्रथमादिपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, प्रथमादिपादमध्यभागो द्वितीयादिपादमध्यभागेषु, प्रथमादिपादान्तभागो द्वितीयादिपादान्तभागेषु यम्यत इति सप्तविंशतिधा । खण्डभेदकल्पनया परिगणनायां भूयसी भेदसंख्येत्युपरम्यते । तत्र दिङ्मात्रं दर्शयितुं पादयमकं तावदुदाहरति—

२ अथैकस्य पादस्यादिमध्यान्तेषु यमकं क्रमेणोदाहरति ।

३ अथ पादयोरादिमध्यान्तभागेषु यमकं क्रमेणोदाहरति ।

'अप्यशक्यं त्वया दत्तं दुःखं शक्यन्तरात्मनि ॥
बाष्पो वाहीकनारीणां वेगवाही कपोलयोः' ॥

'सपदि कृतपदस्त्वदीक्षितेन स्मितशुचिना स्मरतत्त्वदीक्षितेन ।
भवति बत जनः सचित्तदाहो न खलु मृषा कुत एव चित्तदाहो' ॥

एकान्तरपादान्तयमकं यथा—

'उद्वेजयति भूतानि यस्य राज्ञः कुशासनम् ।
सिंहासनवियुक्तस्य तस्य क्षिप्रं कुशासनम्' ॥

[१]एवमेकान्तरपादादिमध्ययमकान्यूह्यानि । समस्तपादान्तयमकं यथा—

'नतोन्नत[२]भ्रूगतिबद्धलास्यां विलोक्य तन्वीं शशिपेशलास्याम् ।
मनः किमुत्ताम्यसि चञ्चलास्यां कृती स्मराज्ञा यदि पुष्कला स्याम्' ॥

[३]एवं समस्तपादादिमध्यान्तयमकानि व्याख्यातानि । [४]अन्ये च संकरजातिभेदाः सुधियोत्प्रेक्ष्याः ।

अक्षरयमकं त्वेकाक्षरमनेकाक्षरं च । एकाक्षरं यथा—

'नानाकारेण कान्ताभ्रूराराधितमनोभुवा ।
विविक्तेन विलासेन ततक्ष हृदयं नृणाम्' ॥

---

१ एवमिति । एकान्तरितपादादियमकं यथा—

'करोऽतिताम्रो रामाणां तन्त्रीताडनविभ्रमम् ।
करोति सेर्ष्यं कान्ते च श्रवणोत्पलताडनम्' ॥

एकान्तरितपादमध्ययमकं यथा—

'यान्ति यस्यान्तिके सर्वेऽप्यन्तकान्तमुपाधयः। तं शान्तचित्तवृत्तान्तं कालीकान्तमुपास्महे' ॥ इति ।

२ चतुर्ष्वपि पादेषु अन्तयमकमुदाहरति ।

३ एवमिति । समस्तपादादियमकं यथा—

'सारसालंकृताकारा सारसामोदनिर्भरा। सारसालवृतप्रान्ता सा रसाढ्या सरोजिनी' ॥

समस्तपादमध्ययमकं यथा—

'स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान्। अमायते यतेऽप्यभूत्सुखाय ते यते क्षयम्' ॥

४ अन्ये चेति ।

'सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम् ।
मता फणवतोऽवतो रसपरा परास्तवसुधा सुधाधिवसति' ॥

इत्यादि ।

'एवं स्थानान्तरयोगेऽपि द्रष्टव्यः । सजातीयनैरन्तर्यादस्य प्रकर्षो भवति। स चायं हरिप्रबोधे दृश्यते । यथा—

'विविधधवर्वना नागगर्द्धर्द्धनानाविविततगगनानाममज्जज्जनाना ।
रुरुशशललना नावबन्धुं धुनाना मम हि हिततनानाननस्वस्वनाना' ॥

अनया च वर्णयमकमालया पदयमकमाला व्याख्याता ।

**भङ्गादुत्कर्षः ॥ ३ ॥**

उत्कृष्टं खलु यमकं भङ्गाद्भवति ।

**शृङ्खला परिवर्तकश्चूर्णमिति भङ्गमार्गः ॥ ४ ॥**

एते खलु शृङ्खलादयो यमकभङ्गानां प्रकारा भवन्ति ।

तान्क्रमेण व्याचष्टे—

**वर्णविच्छेदचलनं शृङ्खला ॥ ५ ॥**

वर्णानां विच्छेदो वर्णविच्छेदः तस्य चलनं यत्सा शृङ्खला ।

यथा—' कलिकामधुशब्दे विच्छेदः धुशब्दे च तस्य चलनम् । लिमवर्णयोर्विच्छेदात् ।

---

१ एवमिती । स्थानान्तरयोगे यथा—

'सभासु राजन्नसुराहतैर्मुखैर्महीसुराणां वसुराजितैः स्तुताः ।
न भासुरा यान्ति सुरान्न ते गुणाः प्रजासु रागात्मसु राशितां गताः' ॥

इति, ' अकलङ्कशशाङ्काङ्कामिन्दुमौलेर्मतिर्मम ' इत्यादि ।

२ इत्थमक्षरयमकमुदाहृत्य तदेव नैरन्तर्येणावृत्तमुदाहर्तुमुपश्लोकयति—

३ विविधेति । अत्र पारावारपरिसरभवमाभिलक्ष्य हलधरं हरिराह ।

४ पदयमकमालेति । 'स्वभुवे स्वभुवे भयोभयोर्भवतां भवताम्भासि ते भसिते' इत्यादि द्रष्टव्यम ।

५ यथेति । ' कलिकामधुशब्दे कामशब्दविच्छेदे च तस्य चलनम् ' इति पाठः । अत्र चस्त्वर्थे । पदद्वयात्मके कलिकामधुशब्दे, कामशब्दस्य तु विच्छेदे पृथक्कारे तस्य कलिकामधुशब्दस्य चलनं भवति । कुत इत्यत आह— लिमवर्णयोरिति । यद्वा, ' कलिकामधुशब्दे कामशब्दविच्छेदे मधुशब्दविच्छेदे च तस्य चलनम् ' इति पाठान्तरम् । अत्र चः समुच्चये । अत्र कामशब्दस्य विच्छेदे पृथक्कारे कलिकाविच्छेदस्य चलनं भवति, लिवर्णस्य विच्छेदात् । मधुशब्दस्य विच्छेदे पृथक्कारे कामविच्छेदस्य चलनं भवति, मवर्णस्य विच्छेदादित्यर्थः । एवं शृङ्खलारूपेण वर्णविच्छेदप्रतीतेरयं भङ्गमार्गः शृङ्खलेति व्यपदिश्यते ।

**सङ्गविनिवृत्तौ स्वरूपापत्तिः परिवर्तकः ॥ ६ ॥**

अन्यवर्णसंसर्गः सङ्गः । तद्विनिवृत्तौ स्वरूपस्यान्यरूपतिरस्कृतस्यापत्तिः प्राप्तिः परिवर्तकः ।

यथा—'कलिकामधु गर्हितम्' इति । अत्रार्हितमिति पदं गकारस्य व्यञ्जनस्य सङ्गाद्गर्हितमित्यन्यस्य रूपमापन्नम् । तत्र व्यञ्जनसङ्गे विनिवृत्ते स्वरूपमापद्यते अर्हितमिति । अन्यवर्णसंक्रमेण भिन्नरूपस्य पदस्य ताद्रूप्यविधिरयमिति तात्पर्यार्थः । [1]एतेनेतरावपि व्याख्यातौ ।

**पिण्डाक्षरभेदे स्वरूपलोपश्चूर्णम् ॥ ७ ॥**

पिण्डाक्षरभेदे सति पदस्य स्वरूपलोपश्चूर्णम् । यथा—

'योऽचलकुलमवति चलं दूरसमुन्मुक्तशुक्तिमीनां कान्तः ।
साग्निं बिभर्ति च सलिलं दूरसमुन्मुक्तशुक्तिमीनाङ्कान्तः' ॥

अत्र शुक्तिपदे क्तीति पिण्डाक्षरम् । तस्य भेदे शुक्तिपदं लुप्यते । ककारतिकारयोरन्यत्र संक्रमात् । दूरसमुन्मुक्तशुक् अचलकुलम्, तिमीनां कान्तः समुद्रः ।

श्लोकाश्चात्र—

'अखण्डवर्णविन्यासचलनं शृङ्खला मता ।
अनेन खलु भङ्गेन यमकानां विचित्रता' ॥
'यदन्यसङ्गमुत्सृज्य नेपथ्यमिव नर्तकः ।
शब्दस्वरूपमारोहेत्स ज्ञेयः परिवर्तकः' ॥
'पिण्डाक्षरस्य भेदेन पूर्वापरपदाश्रयात् ।
वर्णयोः पदलोपो यः स भङ्गश्चूर्णसंज्ञकः' ॥

---

१ एतेनेति । नानाविच्छेदशालिपदमेलने स्वरूपलाभः, भिन्नयोर्हलोः पिण्डीकरणे च स्वरूपलाभ इति द्वौ भेदौ द्रष्टव्यौ ।

२ पिण्डाक्षरस्य संयुक्ताक्षरस्य ।

'[1]अप्राप्तचूर्णभङ्गानि यथास्थानस्थितान्यपि ।
अलकानीव नात्यर्थं यमकानि चकासति ॥'

'विभक्तिपरिणामेन यत्र भङ्गः क्वचिद्भवेत् ।
न तदिच्छन्ति यमकं यमकोत्कर्षकोविदाः ॥'

'आरूढं भूयसा यत्तु पदं यमकभूमिकाम् ।
न युज्यते पुनस्तस्य युक्तानुप्रासकल्पना ॥'

'विभ[2]क्तीनां विभक्तत्वं संख्यायाः कारकस्य च ।
आवृत्तिः सुप्तिङन्तानां मिथश्च यमकाद्भुतम् ॥'

**शेषः सरूपोऽनुप्रासः ॥ ८ ॥**

पदमेकार्थमनेकार्थं च स्थानानियतं तद्विधमक्षरं च शेषः । सरूपोऽन्येन प्रयुक्तेन तुल्यरूपोऽनुप्रासः । ननु च 'शेषोऽनुप्रासः' इत्येतावदेव सूत्रं कस्मान्न कृतम्? आवृत्तिशेषोऽनुप्रास इत्येव हि व्याख्यास्यते । सत्यम् । सिध्यत्येवावृत्तिशेषे । किं त्वव्याप्तिप्रसङ्गः । विशेषार्थं च सरूपग्रहणम् । कार्त्स्न्येनैवावृत्तिः कार्त्स्न्यैकदेशाभ्यां तु सारूप्यमिति ।

**अनुल्बणो वर्णानुप्रासः श्रेयान् ॥ ९ ॥**

---

१ भङ्गादुत्कर्षं इत्युपक्रम्य भङ्गमार्गेषु प्रकर्षं प्रतिपाद्य अन्यत्रापकर्षमवगमयितुमाह—अप्राप्तेति ।

२ विभक्तीनामिति । प्रथमादीनां विभक्तीनां विभक्तत्वं विविधत्वम्, एकवचनादिलक्षणायाः संख्यायाः कर्तृकर्मादेः कारकस्य विभक्तत्वम्, सुबन्तानां तिङन्तानां च पदानामावृत्तिर्यत्र, तत् यमकाद्भुतम् अतिशयितं यमकमित्यर्थः । क्रमेणोदाहरणानि

'विश्वप्रमात्रा भवता जगन्ति व्याप्तानि मात्रापि न मुञ्चति त्वाम्'

'एताः सन्नाभयो बाला यासां सन्नाभयः प्रियः'

'यतस्ततः प्राप्तगुणाः प्रभावे यतस्ततश्चेतसि भासतेऽयम्'

'सरति स रतिकान्तस्ते ललामो ललामः' इत्यादीनि ।

अत्र विभक्तिविपरिणाममात्रे यमकत्वहानिः । प्रकृत्यर्थस्यापि भेदे यमकाद्भुतत्वमिति विवेकः ।

वर्णानामनुप्रासः स खल्वनुल्बणोऽलीनः ([1]अपीनः) श्रेयान्। यथा—

'क्वचिन्मसृणमांसलं क्वचिदतीव तारास्पदं
प्रसन्नसुभगं मुहुः स्वरतरङ्गलीलाङ्कितम्।
इदं हि तव वल्लकीरणितनिर्गमैर्गुम्फितं
मनो मदयतीव मे किमपि साधुसंगीतकम्॥'

उल्बणस्तु न श्रेयान्। यथा—'वल्लीबद्धोर्ध्वजूटोद्भटमटति रटत्कोटिकोदण्डदण्डः' इति।

**पादानुप्रासः पादयमकवत्॥ १०॥**

ये पादयमकस्य भेदास्ते पादानुप्रासस्येत्यर्थः। तेषामुदाहरणानि यथा—

'[2]कविराजमविज्ञाय कुतः काव्यक्रियादरः।
कविराजं च विज्ञाय कुतः काव्यक्रियादरः।'

'[3]आखण्डयन्ति मुहुरामलकीफलानि
बालानि बालकपिलोचनपिङ्गलानि।'

'वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाशकाशाः
काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंस हंसाः।
हंसाभाम्भोदमुक्तः स्फुरदमलरुचिर्मेदिनीचन्द्र चन्द्रः
चन्द्राङ्कः[4] शारदस्ते जयकृदुपनतो विद्विषां काल कालः॥'

---

१ अपीन इति। मसृण इत्यर्थः। उदाहरणं तु

'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला'॥

इत्यादि प्रसिद्धमिति मत्वा उल्बणमुदाहरति—यथा वल्लीबद्धेति।

२ कविराजमिति। एकत्र आदरः, अन्यत्र दरः। 'दरस्त्रासो भीतिर्भीः साध्वसं भयम्' इत्यमरः। उभयत्र आदर इति वा व्याख्येयम्।

३ आखण्डयन्तीति। अत्र 'लानि' इत्यक्षरानुप्रासः।

४ अत्र समस्तपादान्तपदानुप्रासः। पादान्तपदानामुपरि पादादिषु पुनर्ग्रहणान्मुक्तपदग्रहाख्यमन्यदपि वैचित्र्यं द्रष्टव्यम्।

'[1]कुवलयदलश्यामा मेघा विहाय दिवं गताः
कुवलयदलश्यामो निद्रां विमुञ्चति केशवः ।
कुवलयदलश्यामाश्यामालताद्य विजृम्भते
कुवलयदलश्यामं चन्द्रो नभः प्रविगाहते ॥'

एवम्[2]अन्येऽपि भेदा द्रष्टव्याः ।

इति काव्यालंकारसूत्रवृत्तावालंकारिके चतुर्थेऽधिकरणे शब्दालंकारविचारो नाम प्रथमोऽध्यायः ।

---

उपमाविचारो नाम द्वितीयोऽध्यायः ।

संप्रत्यर्थालंकाराणां प्रस्तावः । तन्मूलं चोपमेति सैव विचार्यते—

**उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा ॥ १ ॥**

उपमीयते सादृश्यमानीयते येनोत्कृष्टगुणेनान्यत्तदुपमानम् । यदुपमीयते न्यूनगुणं तदुपमेयम् । उपमानेनोपमेयस्य गुणलेशतः साम्यं यदसावुपमेति । ननूपमानमित्युपमेयमिति च संबन्धिशब्दावेतौ तयोरेकतरोपादानेनैवान्यतरसिद्धिरिति । यथा—'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्रोपमितग्रहणमेव कृतं नोपमानग्रहणमिति, तद्वदत्रोभयग्रहणं न कर्तव्यम् । सत्यम् । तत्कृतं । लोकप्रसिद्धिपरिग्रहार्थम् । यदेवोपमेयमुपमानं च लोकप्रसिद्धं तदेव परिगृह्यते, नेतरत् । नहि यथा 'मुखं कमलमिव' इति, तथा 'कुमुदमिव' इत्यपि भवति ।

**गुणबाहुल्यतश्च कल्पिता ॥ २ ॥**

गुणानां बाहुल्यं गुणबाहुल्यं तत उपमानोपमेयस्य साम्यात्कल्पितोपमा ।

---

१ कुवलयदलेति । अत्र सर्वपादादिपदानुप्रासः ।

२ एवमन्येऽपीति ।
' सितकरकाररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥
इत्यादयः प्रत्येतव्याः ॥

कविभिः कल्पितत्वात्कल्पिता । पूर्वा तु लौकिकी । ननु कल्पिताया लोकप्रसिद्ध्यभावात्कथमुपमानोपमेयनियमः । गुणबाहुल्यस्योत्कर्षापकर्षकल्पनाभ्याम् । तद्यथा--

'उद्गर्भहूणतरुणीरमणोपमर्द-
भुग्नोन्नतिस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथमग्रकरैर्व्यनक्ति' ॥

'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्' ।

'अभिनवकुशसूचिस्पर्धि कर्णे शिरीषम्'

'इदानीं प्लक्षाणां जरठदलविश्लेषचतुरः
शिखानामाबन्धः स्फुरति शुकचञ्चूपुटनिभः ।
ततः स्त्रीणां हन्त क्षममधरकान्तिं तुलयितुं
समन्तान्निर्याति स्फुटसुभगरागं किसलयम् ॥ इति ।

**तद्द्वैविध्यम् । पदवाक्यार्थवृत्तिभेदात् ॥ ३ ॥**

तस्या उपमाया द्वैविध्यम् । पदवाक्यार्थवृत्तिभेदात् । एका पदार्थवृत्तिः, अन्या वाक्यार्थवृत्तिरिति । पदार्थवृत्तिर्यथा—

'[1]हरिततनुषु बभ्रुत्वग्विमुक्तासु यासां
कनककणसधर्मा मान्मथो रोमभेदः' ।

वाक्यार्थवृत्तिर्यथा—

'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो नवचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः' ॥

**सा पूर्णा लुप्ता च ॥ ४ ॥**

सा उपमा पूर्णा लुप्ता च भवति ।

---

१ हरिततनुष्विति । कनककणसधर्मेत्यत्र पदार्थवृत्तिरुपमा ।

**गुणद्योतकोपमानोपमेयशब्दानां सामग्र्ये पूर्णा ॥ ५ ॥**

[1]गुणादिशब्दानां सामग्र्ये साकल्ये पूर्णा । यथा—

'[2]कमलमिव मुखं मनोज्ञमेतत्' इति ।

**लोपे लुप्ता ॥ ६ ॥**

[3]गुणादिशब्दानां वैकल्पे लोपे लुप्ता । गुणशब्दलोपे यथा—'शशीव राजा' इति । द्योतकशब्दलोपे यथा—'दूर्वाश्यामेयम्' । उभयलोपे यथा—'शशिमुखी' इति । उपमानोपमेयलोपस्तूपमाप्रपञ्चे द्रष्टव्यः ।

**स्तुतिनिन्दातत्त्वाख्यानेषु ॥ ७ ॥**

स्तुतौ निन्दायां तत्त्वाख्याने चास्याः प्रयोगः । स्तुतिनिन्दयोर्यथा—

'[4]स्निग्धं भवत्यमृतकल्पमहो कलत्रं
[5]हालाहलं विषमिवापगुणं तदेव ।'

तत्त्वाख्याने यथा—

'[6]तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
यस्तन्वि तारकान्यासः शकटाकारमाश्रितः ॥'

**हीनत्वाधिकत्वलिङ्गवचनभेदसादृश्यासंभवास्तद्दोषाः ॥ ८ ॥**

तस्या उपमाया दोषा भवन्ति—हीनत्वमधिकत्वं लिङ्गभेदो वचनभेदोऽसादृश्यमसंभव इति ।

---

१ गुणादीति । उपमानोपमेयसमानधर्मसादृश्यप्रतिपादकानामन्यूनत्वेन प्रयोगे पूर्णा ।

२ कमलमिवेति । अत्र कमलमुपमानम्, मुखमुपमेयम्, इवशब्दः सादृश्याद्योतकः, मनोज्ञशब्दः समानधर्मवचनः, एतेषामन्यूनतया प्रयोगादियमुपमा पूर्णा ।

३ गुणादिशब्दानामिति । उपमानोपमेयगुणसादृश्यप्रतिपादकानां मध्ये एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता ।

४ स्तुतीति । स्निग्धमित्यादौ स्तुतिः ।

५ हालाहलमित्यादौ निन्दा ।

६ तां रोहिणीमित्यत्र तत्त्वाख्यानम् ।

तान्क्रमेण व्याख्यातुमाह—

**जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम् ॥ ९ ॥**

जात्या प्रमाणेन धर्मेण चोपमानस्य न्यूनता या तद्धीनत्वमिति।

जातिन्यूनत्वरूपं हीनत्वं यथा—'चाण्डालैरिव युष्माभिः साहसं परमं कृतम्'।

प्रमाणन्यूनत्वरूपं हीनत्वं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति'। उपमेयादुपमानस्य धर्मतो न्यूनत्व यत्तद्धर्मन्यूनत्वम्। तद्रूपं हीनत्वं यथा—

'स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान्'॥

अत्र मौञ्जीप्रतिवस्तु तडिन्नास्त्युपमान इति हीनत्वम्। न च कृष्णाजिनपटमात्रस्योपमेयत्वं युक्तम्। मौञ्ज्या व्यर्थत्वप्रसङ्गात्। ननु नीलजीमूतग्रहणेनैव तडित्प्रतिपाद्यते। तन्न। व्यभिचारात्। अव्यभिचारे तु भवन्ती प्रतिपत्तिः केन वार्यते। तदाह—

**धर्मयोरेकनिर्देशेऽन्यस्य संवित्। साहचर्यात् ॥ १० ॥**

धर्मयोरेकस्यापि धर्मस्य निर्देशेऽन्यधर्मस्य संवित् प्रतिपत्तिर्भवति। कुतः। साहचर्यात्। सहचरितत्वेन प्रसिद्धयोरवश्यमेकस्य निर्देशेऽन्यस्य प्रतिपत्तिर्भवति। तद्यथा—

'निर्वृष्टेऽपि बहिर्घने न विरमन्त्यन्तर्जरद्वेश्मनो
लूतातन्तुततिच्छिदो मधुपृषत्पिङ्गाः पयोबिन्दवः।
चूडाबर्बरके निपत्य कणिकाभावेन जाताः शिशो-
रङ्गास्फालनभग्ननिद्रगृहिणीचित्तव्यथादायिनः'॥

अत्र मधुपृषतां वृत्तत्वपिङ्गत्वे सहचरिते। तत्र पिङ्गशब्देन पिङ्गत्वे प्रतिपन्ने वृत्तत्वप्रतिपत्तिर्भवति। एतेन 'कनकफलकचतुरस्रं श्रोणिबिम्बम्' इति व्याख्यातम्। कनकफलकस्य गौरत्वचतुरस्रत्वयोः साहचर्याच्चतुरस्रत्वश्रु-

स्यैव गौरत्वप्रतिपत्तिरिति । [1]ननु च यदि धर्मन्यूनत्वमुपमानस्य दोषः, कथमयं प्रयोगः—

'सूर्यांशुसंमीलितलोचनेषु दीनेषु पद्मानिलनिर्मदेषु ।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः केका विनेशुः शिखिनां मुखेषु ॥'

अत्र बहुत्वमुपमेयधर्माणामुपमानात् । न विशिष्टानामेव मुखानामुपमेयत्वात् । तादृशेष्वेव केकाविनाशस्य संभवात् ।

**तेनाधिकत्वं व्याख्यातम् ॥ ११ ॥**

तेन हीनत्वेनाधिकत्वं व्याख्यातम्, जातिप्रमाणधर्माधिक्यमधिकत्वमिति । जात्याधिक्यरूपमधिकत्वं यथा—

'विशन्तु वृष्णयः* शीघ्रं रुद्रा इव महौजसः' ।

प्रमाणाधिक्यरूपं यथा—

'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः' ॥

धर्माधिक्यरूपं यथा—

---

१ धर्मन्यूनत्वस्योपमादोषत्वे प्रयोगाविरोधमाशङ्कते—ननु चेति । प्रयोगं प्रदर्शयति—सूर्येति । मुखेष्वित्युपमेयस्य लोचनसंमीलनदैन्यानिर्मदत्वानां धर्माणां बाहुल्यं प्रतीयत इति विरोधः । परिहरति—नेति । भर्तृहीनजनाश्रयत्वेन गृहेष्वपि दैन्यमवगम्यते । तादृशेषु गृहेषु साध्वीनामिव दैन्यविशिष्टेषु शिखिमुखेषु केकानां विलयो वक्तव्यः, अन्यथा तदसंभवात् । दैन्यं च नेत्रनिमीलनानिर्मदत्वाभ्यां तदनुभावाभ्यामुपपादितमिति नास्ति धर्मन्यूनतेत्याह—विशिष्टानामिति ।

'धर्मागमे दुर्मदतिग्मरश्मिसंतापसंमीलितलोचनेषु ।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः केका विलीनाः शिखिनां मुखेषु ॥'

इति विधान्तरं विधातुं न प्रबन्धकर्ता न प्रगल्भते; किंतु भर्तृहीनत्वस्य निर्मदत्वादेश्चोपपादकस्य भेदेऽप्युभयत्र दैन्यमेव साधर्म्यमिति विवक्षितमिति न कश्चिद्विरोधः ।

* 'विष्टयः' इत्यपि पाठान्तरम् । 'विष्टिः कारौ कर्मकारे' इति वैजयन्ती

''सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत ।
सवाडवाग्निः सावर्तः स्रोतसामिव नायकः '॥

सवाडवाग्निरित्यस्योपमेयेऽभावाद्धर्माधिक्यमिति[1] । अनयोर्दोषयोर्विपर्ययाख्यस्य[2] दोषस्यान्तर्भावान्न पृथगुपादानम् । अत एवास्माकं मते षड्दोषा इति ।

**उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः ॥ १२ ॥**

उपमानस्योपमेयस्य च लिङ्गयोर्व्यत्यासो विपर्ययो लिङ्गभेदः । यथा—

'सैन्यानि नद्य इव जग्मुरनर्गलानि' ।

**इष्टः पुंनपुंसकयोः प्रायेण ॥ १३ ॥**

पुंनपुंसकयोरुपमानोपमेययोर्लिङ्गभेदः प्रायेण बाहुल्येनेष्टः । यथा—'चन्द्रमिव मुखं पश्यति' इति । 'इन्दुरिव मुखं भाति' एवंप्रायं[3] तु नेच्छन्ति ।

**लौकिक्यां समासाभिहितायामुपमाप्रपञ्चे च ॥ १४ ॥**

लौकिक्यामुपमायां समासाभिहितायामुपमायामुपमाप्रपञ्चे चेष्टो लिङ्गभेदः प्रायेणेति । लौकिक्यां यथा—'छायेव स तस्य' 'पुरुष इव स्त्री' इति ।

---

१ सवाडवेति । अत्र सरश्मीति चक्रविशेषणवदावर्तविशेषणानुपादानान्न्यूनत्वमपि द्रष्टव्यम् । जातिप्रमाणहीनत्वाधिकत्वे पदार्थोपमायां दोषः, धर्मन्यूनत्वाधिकत्वे तु वाक्यार्थोपमायाम् । पदार्थोपमायां न धर्मन्युनाधिकभावः संभवति, समानधर्मस्यैकत्वेन वाक्यार्थोपमायामिवानेकविशेषवैशिष्ट्यासंभवादिति द्रष्टव्यम् ।

२ विपर्ययाख्यस्येति । उपमेयधर्मस्य हीनत्वमाधिकत्वं च विपर्ययः; तदात्मकस्य दोषस्य हीनत्वाधिकत्वानतिरेकात् तत्रैवान्तर्भाव इति तन्निरुपणेनैव निरुपितप्रायत्वान्न प्रथगभिधानं कृतमित्यर्थः ।

३ एवंप्रायमिति । एवंप्रायं तु नेच्छन्तीत्यात्मनस्तत्रौदासीन्यमवगमयति । यत्र हि लिङ्गभेदेऽपि विशेषणमुभयान्वयक्षमम्, तत्र न दोषः । यत्र तु विशेषणमेकत्रान्वितं सदितरत्र नान्वयक्षमम्, तत्र दोष इति तात्पर्यम् ।

समासाभिहितायां यथा—'भुजलता नीलोत्पलसदृशी' इति । उपमा-प्रपञ्चे यथा—

''शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥' शाकुंतल १.१५

एवमन्यदपि प्रयोगजातं द्रष्टव्यम् ।

**तेन वचनभेदो व्याख्यातः ॥ १५ ॥**

तेन लिङ्गभेदेन वचनभेदो व्याख्यातः । यथा—'पश्यामि लोचने तस्याः पुष्पं पुष्पलिहो यथा ।'

**अप्रतीतगुणसादृश्यमसादृश्यम् ॥ १६ ॥**

अप्रतीतैरेव गुणैर्यत्सादृश्यं तदप्रतीतगुणसादृश्यमसादृश्यम् । यथा—'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' काव्यस्य शशिना सह यत्सादृश्यं तदप्रतीतैरेव गुणैरिति । ननु चार्थानां रश्मितुल्यत्वे सति काव्यस्य शशितुल्यत्वं भविष्यति । मैवम् । काव्यस्य शशितुल्यत्वे सिद्धेऽर्थानां रश्मितुल्यत्वं सिद्ध्यति । नह्यर्थानां रश्मीनां च कश्चित्सादृश्यहेतुः प्रतीतो गुणोऽस्ति । तदेवमितरेतराश्रयदोषो दुरुत्तर इति ।

---

१ शुद्धान्तदुर्लभमित्यत्र प्रतिवस्तूपमा ।

२ एवमिति । 'नेदं नभोमण्डलमम्बुराशिः' इत्याद्यपह्नुत्यादौ द्रष्टव्यम् ।

३ पास्यामीति । पास्याम इति वक्तव्ये पास्यामीति प्रयुक्तत्वाद्वचनभेदः ।

४ नन्वर्थानां रश्मिसादृश्यप्रतीत्या काव्यशशिनोरपि सादृश्यं संभवतीति शङ्कते—नन्विति ।

५ परस्पराश्रयपराहतमिदं चोद्यमिति परिहरति—नैवमिति । अर्थानां रश्मिसादृश्ये सिद्धे शशिसादृश्यं काव्यस्य सिध्यति; सिद्धे च काव्यस्य शशिसादृश्येऽर्थानां रश्मिसादृश्यमिति परस्पराश्रय इत्यर्थः । ननु काव्यशशिसादृश्यनिरपेक्षमेव अर्थरश्मिसादृश्यं संभवति ; कुतः परस्पराश्रयप्रसङ्ग इत्यत आह—नाप्यर्थानामिति । दुरुत्तरः दुष्परिहरः ।

**असादृश्यहता ह्युपमा। तन्निष्ठाश्च कवयः ॥ १७ ॥**

[1]असादृश्येन हता असादृश्यहता उपमा, तन्निष्ठा उपमाननिष्ठाश्च कवय इति।

**उपमानाधिक्यात्तदपोह इत्येके ॥ १८ ॥**

उपमानाधिक्यात्तस्यासादृश्यस्यापोह इत्येके मन्यन्ते। यथा—कर्पूरहार-हरहाससितं यशस्ते।' कर्पूरादिभिरुपमानैर्बहुभिर्यशसः सादृश्यं संस्थापितं भवति। तेषां शुक्लगुणातिरेकात्।

**नापुष्टार्थत्वात् ॥ १९ ॥**

उपमानाधिक्यात्तदपोह इति यदुक्तं तन्न। अपुष्टार्थत्वात्। एकस्मिन्नुपमाने प्रयुक्ते उपमानान्तरप्रयोगो न कंचिदर्थविशेषं पुष्णाति। तेन 'बल-सिन्धुः सिन्धुरिव क्षुभितः' इति प्रयुक्तम्। ननु सिन्धुशब्दस्य द्विः प्रयोगात्पौनरुक्त्यम्। न। अर्थविशेषात्। बलं सिन्धुरिव वैपुल्याद्बलसिन्धुः सिन्धुरिव क्षुभित इति क्षोभसारूप्यम्। तस्मादर्थभेदान्न पौनरुक्त्यम्। अर्थपुष्टिस्तु नास्ति। सिन्धुरिव क्षुभित इत्यनेनैव वैपुल्यं प्रतिपत्स्यते। उक्तं हि—'धर्मयोरेकनिर्देशेऽन्यसंवित्। साहचर्यात्।'

**अनुपपत्तिरसंभवः ॥ २० ॥**

अनुपपत्तिरनुपपन्नत्वमुपमानस्यासंभवः। यथा—

'चकास्ति वदने तस्याः स्मितच्छाया विकासिनि।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका ॥'

---

१ सादृश्यैकसारायामुपमायां परां काष्ठामातिष्ठमानैः कविभिरसादृश्यमवश्यमपोहनीयमिति शिक्षयितुं सूत्रमुपक्षिपति—असादृश्येति।

२ श्वेतिमातिशयविशिष्टतया वर्णनीये यशसि सितिमगुणाप्रतीतौ वैसादृश्यशङ्कायां सितिमगुणातिशयविशिष्टैर्बहुभिरुपमानैः सादृश्यदृढीकरणे उपमेये शौक्ल्यगुणातिरेकावगमात् वैसादृश्यमपोह्यत इत्यभिसंधाय व्याचष्टे—उपेति।

चन्द्रिकायामुन्निद्रत्वमरविन्दस्येत्यनुपपत्तिः । नन्वर्थविरोधोऽयमस्तु । किमुपमादोषकल्पनया । न । उपमायामतिशयस्येष्टत्वात् । कथं तर्हि दोषः ।

**न विरुद्धोऽतिशयः ॥ २१ ॥**

विरुद्धस्यातिशयस्य संग्रहो न कर्तव्य इत्यस्य सूत्रस्य तात्पर्यार्थः । तानेतान्षडुपमादोषान् ज्ञात्वा कविः परित्यजेत् ।

इति काव्यालंकारसूत्रवृत्तावालंकारिके चतुर्थेऽधिकरणे उपमाविचारो नाम द्वितीयोऽध्यायः ।

---

उपमाप्रपञ्चाधिकारो नाम तृतीयोऽध्यायः ।

संप्रत्युपमाप्रपञ्चो विचार्यते—कः पुनरसावित्याह—

**प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः ॥ १ ॥**

[१]प्रतिवस्तु प्रभृतिर्यस्य स प्रतिवस्तुप्रभृतिः । उपमायाः प्रपञ्च उपमाप्रपञ्च इति ।

वाक्यार्थोपमायाः प्रतिवस्तुनो भेदं दर्शयितुमाह—

**उपमेयस्योक्तौ समानवस्तुन्यासः प्रतिवस्तु ॥ २ ॥**

समानं वस्तु वाक्यार्थः । तस्य न्यासः समानवस्तुन्यासः । उपमेयस्यार्थद्वाक्यार्थस्योक्तौ सत्यामिति । अत्र द्वौ वाक्यार्थौ । एको वाक्यार्थः प्रतिवस्तूपमाया इति भेदः । तद्यथा—

---

१ प्रतिवस्त्विति । प्रभृतिशब्द आद्यर्थः । प्रतिवस्तुप्रमुखाणाम् अलंकाराणामुपमागर्भत्वादुपमाप्रपञ्च इति व्यपदेशः कृतः—

" प्रतिवस्तुप्रभृतय उद्दिश्यन्ते यथाक्रमम् । प्रतिवस्तु समासोक्तिरथाप्रस्तुतशंसनम् ॥
अपह्नुती रूपकं च श्लेषो वक्रोक्त्यलंकृतिः । उत्प्रेक्षातिशयोक्तिश्च संदेहः सविरोधकः ॥
विभावनानन्वयः स्यादुपमेयोपमा ततः । परिवृत्तिः क्रमः पश्चाद्दीपकं च निदर्शना ॥
अर्थान्तरस्य न्यसनं व्यतिरेकस्ततः परम् । विशेषोक्तिरथ व्याजस्तुतिर्व्याजोक्त्यलंकृतिः ॥
स्यात्तुल्ययोगिताक्षेपः सहोक्तिश्च समासतः । अथ संसृष्टिभेदौ द्वावुपमारूपकं तथा ॥
उत्प्रेक्षावयवश्चेति विज्ञेयोऽलंकृतिक्रमः ॥ "

२ उपमेयस्य वाक्येन प्रतिपादने उपमानस्यापि वाक्यान्तरेण प्रतिपादनं प्रतिवस्त्विति लक्षणार्थः ; अत एव वाक्यार्थोपमायाः प्रतिवस्तुनो भे इत्याह—अत्रेति ।

'[1]देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥'

प्रतिवस्तुनः समासोक्तेर्भेदं दर्शयितुमाह--

**अनुक्तौ समासोक्तिः ॥ ३ ॥**

उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः । संक्षेपवचनात्समासोक्तिरित्याख्या । यथा--

'श्लाघ्यौ ध्वस्ताध्वगग्लानेः करीरस्य मरौ स्थितिः ।
धिङ्मेरौ कल्पवृक्षाणामनुत्पन्नार्थिनां श्रियः ॥'

समासोक्तेरप्रस्तुतप्रशंसाया भेदं दर्शयितुमाह--

**किंचिदुक्तावप्रस्तुतप्रशंसा ॥ ४ ॥**

उपमेयस्य किंचिल्लिङ्गमात्रेणोक्तौ समानवस्तुन्यासेऽप्रस्तुतप्रशंसा । यथा--

'लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥'

अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुतप्रशंसा ।

अपन्हुतिरपि ततो भिन्नेति दर्शयितुमाह--

---

१ देवीभावमिति । अत्र पूर्वोत्तरवाक्याभ्यां वस्तुप्रतिवस्तुनोः प्रतिपादनात् प्रतिवस्त्वलंकारः ।

२ अत्र करीरस्य मरुस्थितिश्लाघनेन कल्पवृक्षाणां मेरुस्थितिनिन्दनेन च तदुपमेययोः परोपकारप्रवणतद्विमुखयोः श्लाघानिन्दे समस्योक्ते इति समासोक्तिः ।

३ लिङ्गमात्रेणोक्तौ एकदेशेनोपादाने ।

४ लावण्येति । अत्र लावण्यपदार्थैनकदेशेनोपमेयानां नयनादीनामुक्तावुत्पलादीनामप्रस्तुतानां प्रशंसनादप्रस्तुतप्रशंसा नामालंकारः ।

**समेन वस्तुनान्यापलापोऽपह्नुतिः ॥ ५ ॥**

समेन तुल्येन वस्तुना वाक्यार्थेनान्यस्य वाक्यार्थस्यापलापो निह्नवो यस्तत्त्वाध्यारोपणायासावपन्हुतिः । यथा—

'[1]न केतकीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः ।
तडिल्लतेयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विवर्तते ॥'

वाक्[2]यार्थयोस्तात्पर्यात्ताद्रूप्यमिति न रूपकम् ।

रूपकं तु कीदृशमित्याह—

**उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम् ॥ ६ ॥**

उपमानोपमेयस्य गुणसाम्यात्तत्त्वस्याभेदस्यारोपणमारोपो रूपकम् । उपमानोपमेययोरुभयोरपि ग्रहणं लौकिक्याः कल्पितायाश्चोपमायाः प्रकृतित्वमत्र यथा विज्ञायेतेति । यथा—

'[3]इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥'

उत्तररामचरितम् १.३८.

मुखचन्द्रादीनां तूपमा । समासात् न चन्द्रादीनां रूपकत्वं युक्तमिति । रूपकाच्छ्लेषस्य भेदं दर्शयितुमाह—

---

१ केतकीसूचिविलासतडिल्लताविलासयोरुपमेययोरुपमानभूतविधिहासस्मरज्योतिर्विवर्तनाध्यारोपेण तयोरपलापादपह्नुतिः ।

२ आरोपरूपत्वाविशेषात् कथमपह्नुते रुपकाद्भेद इत्याशङ्क्य भेदं दर्शयति—**वाक्यार्थयोरिति** । अपह्नुतौ वाक्यार्थयोरार्थिकं ताद्रूप्यम्, । रूपके तु पदार्थयोः शाब्दं ताद्रूप्यमिति भेदः ।

३ इयं गेहे लक्ष्मीरिति । अत्र इयमिति सर्वनाम्ना सीतां निर्दिश्य तत्र लक्ष्मीत्वममृतवर्तित्वम्, अस्याः स्पर्शे चन्दनरसत्वम्, बाहौ मौक्तिकसरत्वं चाध्यारोप्यत इति रूपकम् ।

**स धर्मेषु तन्त्रप्रयोगे श्लेषः ॥ ७ ॥**

उपमानेनोपमेयस्य धर्मेषु गुणक्रियाशब्दरूपेषु स [1]तत्त्वाध्यारोपस्तन्त्रप्रयोगे तन्त्रेणोच्चारणे सति श्लेषः। यथा--

'आकृष्टामलमण्डलाग्ररुचयः संनद्धवक्षःस्थलाः
सोष्माणो व्रणिता विपक्षहृदयप्रोन्माथिनः कर्कशाः।
उद्वृत्ता गुरवश्च यस्य शमिनः श्यामायमानानना
योधा मारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्याज्जिनः' ॥

[3]यथा च गौणस्यार्थस्यालंकारत्वं तथा लाक्षणिकस्यापीति दर्शयितुमाह--

---

(इत्थमुपमानोपमेययोर्व्यासेन प्रयोगे रूपकमुदाहृत्य समासेन प्रयोगे तूपमैव न रूपकमित्याह--मुखेति। मुखचन्द्रादीनां पुरुषव्याघ्रादिसादृश्यादुपमात्वमेव, न रूपकत्वं संभवति, तत्त्वाध्यारोपासंभवादिति भावः। इदमत्रानुसंधेयम्--येषां व्याघ्रादिषु पाठोऽस्ति तेषामुपमैव। ये त्विन्दुप्रभृतयस्तत्र न पठ्यन्ते ते च व्याघ्रादेराकृतिगणत्वात् तत्र द्रष्टव्याः। तथापि मतान्तरानुरोधेन मुखचन्द्रादिषु क्वचिदुपमा, क्वचिद्रूपकमिति द्वैरूप्यं संभवति। तथाच यत्र 'ज्योत्स्नेव भाति द्युतिराननेन्दोः' इत्यादावुपमायां साधकं प्रामाणमस्ति, तत्र व्याघ्रादिसमासः। यत्र 'मोहमहाचलदलने भक्तिः कुलिशाग्रकोटिरेव नृणाम्' इत्यादौ रूपके साधकं प्रमाणमस्ति, तत्र मयूरव्यंसकादिसमासः; 'अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः' इति वचनात्।)

१ अनेकोपकारकारि सकृदुच्चारणं तन्त्रम्। उपमानोपमेययोर्गुणसाम्ये तद्धर्मेषु गुणादिषु तन्त्रेण प्रयोगे सति यत्तादूप्यारोपणम्, स श्लेष इति लक्षणार्थः।

२ अत्र यथासंभवं गुणक्रिया द्रष्टव्याः। यद्यपि समुच्चयोऽत्र स्फुरति, तथापि साधारणविशेषणमाहिम्ना आरोपः प्रतिपाद्यत इति श्लेषः।

३ यथा चेति। यथा मुखचन्द्रादौ गुणयोगादागतस्य गौणार्थस्य रूपकाद्यलंकारता, तथा लक्षणातः प्रतिपन्नस्य लाक्षणिकार्थस्य वक्रोक्त्यलंकारता भवतीति लक्षणार्थः।

**सादृश्याल्लक्षणा वक्रोक्तिः ॥ ८ ॥**

[1]बहूनि हि निबन्धनानि लक्षणायाम् । तत्र सादृश्याल्लक्षणा वक्रोक्तिरसाविति । यथा—[2]‘ उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात्’। अत्र नेत्रधर्मावुन्मीलननिमीलने सादृश्याद्विकाससंकोचौ लक्षयतः ।

‘ इह च निरन्तरनवमुकुलपुलकिता हरति माधवी हृदयम् ।
मदयति च केसराणां परिणतमधुगन्धि निःश्वसितम् ’ ॥
अत्र[3] निःश्वसितमिति परिमलनिर्गमं लक्षयति ।

‘ संस्थानेन स्फुरतु सुभगः स्वर्चिषा चुम्बितु द्याम् ’ ॥
‘ आलस्यमालिङ्गति गात्रमस्याः ’ ।
‘ परिम्लानच्छायामनुवदति दृष्टिः कमलिनीम् ’ ।
‘ प्रत्युषेषु स्फुटितकमलामोदमैत्रीकषायः ’ ।
‘ ऊरुद्वन्द्वं तरुणकदलीकाण्डसब्रह्मचारि । ’

इत्येवमादिषु लक्षणार्थो निरूप्यत इति । लक्षणायां च झटित्यर्थप्रतिपत्तिक्षमत्वं रहस्यमाचक्षत इति । असादृश्यनिबन्धना तु लक्षणा न वक्रोक्तिः । यथा[4]—‘ जरठकमलकन्दच्छेदगौरैर्मयूखैः ’ ।

---

१ बहूनीति ।

‘ अभिधेयेन संबन्धात्सादृश्यात्समवायतः ।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥ ’

इति लक्षणाया निमित्तानि द्रष्टव्यानि । द्विरेफशब्दस्याभिधेयो भ्रमरशब्द इति तेन स्वाभिधेयसंबन्धात् भृङ्गरुपार्थो लक्ष्यते । सिंहो माणवकः, गङ्गायां घोषः, बृहस्पतिरयं मूर्खः, महति समरे शत्रुघ्नस्त्वम्, इति यथाक्रममुदाहरणानि द्रष्टव्यानि ।

२ उन्मिमीलेति । कमलं विचकास कैरवं संचुकोचेति ऋजुवृत्त्या वक्तव्ये तत्सादृश्यादुन्मिमील निमिमीलेति नेत्रक्रियाध्यवसायवक्रिम्णोक्तिरिति वक्रोक्तिः ।

३ अत्र चेति । मुकुलपुलकितेत्यत्र पुलकितत्वं माधव्या मुकुलैरावृतत्वं लक्षयतीत्यपि द्रष्टव्यम् । चुम्बतु द्यामिति चुम्बनं द्योसम्बन्धम्, गात्रमालिङ्गतीति आलिङ्गनम् आलस्यवैशिष्ट्यं गात्रस्य, अनुवदतीत्यत्रानुवादः कमलिनीसादृश्यम्, मैत्री च आमोदसंक्रान्तिम्, सब्रह्मचारीति कदलीकाण्डसमानतां च लक्षयतीत्येवमादिषु प्रयोगेषु लक्षणार्थो निरूप्यते ।

४ यथा जरठेति । सामीप्यमत्र धर्मधर्मिभावसंबन्धः ।

अत्र च्छेदः सामीप्याद्द्रव्यं लक्षयति। तस्यैव गौरत्वोपपत्तेः।

रूपकवक्रोक्तिभ्यामुत्प्रेक्षाया भेदं दर्शयितुमाह—

**[1]अतद्रूपस्यान्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा ॥ ९ ॥**

अतद्रूपस्यातत्स्वभावस्य। अन्यथा अतत्स्वभावतया। अध्यवसानमध्यवसायः। न पुनरध्यारोपो लक्षणा वा। अतिशयार्थमिति भ्रान्तिज्ञाननिवृत्त्यर्थम्। सादृश्यादियमुत्प्रेक्षेति[2]। एनां चेवादिशब्दा द्योतयन्ति। यथा—

'स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः।
स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव[3]' ॥

उत्प्रेक्षैवातिशयोक्तिरिति[4] केचित्। तन्निरासार्थमाह—

**संभाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिः ॥ १० ॥**

संभाव्यस्य[5] धर्मस्य तदुत्कर्षस्य च कल्पनातिशयोक्तिः। यथा[6]—

---

१ स्वरूपान्यथाभावकल्पनास्वभावत्वाविशेषेण रूपकवक्रोक्तिभ्यामुत्प्रेक्षाया अभेदशङ्कायां लक्षणतो भेदं दर्शयितुमनन्तरसूत्रमवतारयति——

२ सादृश्यादियमुत्प्रेक्षेति। प्रयुक्तोऽपि क्वचिदिवशब्दः सादृश्यनिबन्धनत्वसूचनद्वारेणोत्प्रेक्षामपि द्योतयतीत्यर्थः। तदुक्तं दण्डिना,

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इति।

३ स वः पायादिति। अत्र नवबिसलताकोटिकुटिल इति विशेषणसामर्थ्यादिन्दुपदेनेन्दुकलावगम्यते। इन्दुर्मन्दाकिनीसलिलसेकेन कपालादुद्भिन्नोऽङ्कुर इवेत्युत्प्रेक्ष्यत इत्युत्प्रेक्षालंकारः।

४ संभावनारूपत्वाविशेषादुत्प्रेक्षातिशयोक्त्योरभेदं केचिन्मन्यन्ते; तन्मतं निरसितुं लक्षणभेदं दर्शयतीत्याह——उत्प्रेक्षैवेति।

५ संभाव्यस्य उत्प्रेक्ष्यस्य।

६ उदाहरति—उभाविति। यदि तथाविधं व्योम संभाव्येत, तदेव आमुक्तमुक्ताफलस्य वक्षस उपमानं भवेत् न पुनरन्यत् किंचिदित्यतिशयस्योक्तेरतिशयोक्तिः।

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः'॥

यथा वा—

'[1]मलयजरसाविलुप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
'शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः'॥

यथा[2] भ्रान्तिज्ञानस्वरूपोत्प्रेक्षा तथा संशयज्ञानस्वरूपः संदेहोऽपीति दर्शयितुमाह—

**उपमानोपमेयसंशयः संदेहः ॥ ११ ॥**

उपमानोपमेययोरतिशयार्थं यः क्रियते संशयः स संदेहः । यथा—

'इदं कर्णोत्पलं चक्षुरिदं चेति विलासिनि ।
न निश्चिनोति हृदयं किंतु दोलायते पुनः'॥

संदेहवद्[3]विरोधोऽपि प्राप्तावसर इत्याह—

**विरुद्धाभासत्वं विरोधः ॥ १२ ॥**

अर्थस्य विरुद्धस्येवाभासत्वं विरुद्धाभासत्वं विरोधः । यथा—

---

१ एवं संभाव्यधर्मकल्पनामुदाहृत्य तदुत्कर्षकल्पनामुदाहरति—**मलयजेति** । मलयजरसनवहारलतादीनां तावान् धावल्यस्योत्कर्षोऽतिशयः कल्प्यते, यावता चन्द्रिकायां तद्विवेचनाक्षमत्वं चक्षुषोरिति ।

२ यथा लौकिकभ्रमसजातीयामुत्प्रेक्षामतिशयार्थकल्पनात्ववैधर्म्येण लौकिकभ्रान्तितः पृथक्कृत्य प्रदर्शितवान्, तथा संशयमपि लौकिकसजातीयं तथाविधेन वैधर्म्येण ततः पृथक्कृत्य दर्शयितुमाह—**यथेति** ।

३ कल्पनारूपत्वाविशेषादतिशयोक्तेरनन्तरं यथा संदेहालङ्कारः प्राप्तावसरः, तथा विरुद्धकोटिद्वयावलम्बिनः संदेहस्यानन्तरं विरोधालंकारः प्राप्तावसर इति तल्लक्षणं दर्शयतीत्याह—**संदेहवदिति** ।

'पीतं पानमिदं त्वयाद्य दयिते मत्तं ममेदं मनः
पत्राली तव कुङ्कुमेन रचिता रक्ता वयं मानिनि ।
त्वं तुङ्गस्तनभारमन्थरगतिर्गात्रेषु मे वेपथु-
स्त्वन्मध्ये तनुता ममाधृतिरहो मारस्य चित्रा 'गतिः' ॥

यथा वा—

'सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्' ॥

विरोधाद्विभावनाया भेदं दर्शयितुमाह—

**क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्तिर्विभावना ॥ १३ ॥**

क्रियायाः प्रतिषेधे तस्या एव क्रियायाः फलस्य प्रसिद्धस्य व्यक्ति-र्विभावना । यथा ।

'अप्यसज्जनसांगत्ये न वसत्येव वैकृतम् ।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम्' ॥

विरोधप्रसङ्गेनानन्वयं दर्शयितुमाह—

**एकस्योपमेयत्वोपमानत्वेऽनन्वयः ॥ १४ ॥**

एकस्यैवार्थस्योपमेयत्वमुपमानत्वं चानन्वयः । यथा—

'गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव '॥

अनन्यसादृश्यमेतेन प्रतिपादितम् ।

---

१ पानादीनां च वैयधिकरण्याद्विरोधः। मदानीनामर्थान्तरत्वस्वीकारेण विरोध-परिहारः ।

२ सा बालेत्यादावपि विरुद्धाभासत्वं द्रष्टव्यम् ।

३ अक्षालितविशुद्धेष्वित्यत्र कारणरूपक्षालनक्रियाप्रतिषेधेऽपि तत्फलभूताया विशुद्धेः प्रकाशनात् विभावना ।

**क्रमेणोपमेयोपमा ॥ १५ ॥**

एकस्यैवार्थस्योपमेयत्वमुपमानत्वं च क्रमेणोपमेयोपमा । यथा—

'खमिव जलं जलमिव खं हंस इव शशी शशीव हंसोऽयम् ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि' ॥

इयमेव परिवृत्तिरित्येके । तन्निरासार्थमाह—

**समविसदृशाभ्यां परिवर्तनं परिवृत्तिः ॥ १६ ॥**

समेन विसदृशेन वार्थेनार्थस्य परिवर्तनं परिवृत्तिः । [1]यथा—

' आदाय कर्णकिसलयमियमस्मै चरणमरुणमर्पयाति ।
उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये ' ॥

यथा वा—

' विहाय सा हारमहार्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दना ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥'

कु. सं. ५.८.

उपमेयोपमायाः क्रमो भिन्न इति दर्शयितुमाह—

**उपमेयोपमानानां क्रमसंबन्धः क्रमः ॥ १७ ॥**

उपमेयानामुपमानानां चोद्देशिनामनुद्देशिनां च क्रमेण संबन्धः क्रमः। यथा-

' तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः ।
जीयन्ते वल्लकीकुन्दकुसुमेन्दीवरस्रजः' ॥

संबन्धप्रसङ्गेनैव दीपकं दर्शयितुमाह—

---

१ उदाहरति—यथेति । अत्र प्रसारिताख्यं करणं सूचितमिति केचिदाचक्षते ' नायकस्यांस एको द्वितीयः प्रसारित इति प्रसारितकम् ' इति वात्स्यायनसूत्रम् तद्विवृत्तं रतिरहस्ये,

' प्रियस्य वक्षोऽसतलं शिरोऽथवा नयेत सव्यं चरणं नितम्बिनी ।
प्रसारयेद्वा परमायतं पुनर्विपर्ययः स्यादिति हि प्रसारितम् ' इति ।

अत्र चरणकिसलययोः सादृश्यात् समपरिवृत्तिः । विहायेत्यादौ हारवल्कलयं वैसादृश्याद्विसदृशपरिवृत्तिः ।

**उपमानोपमेयवाक्येष्वेका क्रिया दीपकम् ॥ १८ ॥**

[1]उपमानवाक्येषूपमेयवाक्येषु चैका क्रिया अनुषङ्गतः संबध्यमाना दीपकम्।

**तत्त्रिविधम्। आदिमध्यान्तवाक्यवृत्तिभेदात् ॥ १९ ॥**

तत्त्रिविधं भवति। आदिमध्यान्तेषु वाक्येषु वृत्तेर्भेदात्। यथा--

'[2]भूष्यन्ते प्रमदवनानि बालपुष्पैः कामिन्यो मधुनदमांसलैर्विलासैः।
ब्रह्माणः श्रुतिगदितैः क्रियाकलापैः राजानो विरलितवैरिभिः प्रतापैः' ॥

'[3]बाष्पः पथिककान्तानां जलं जलमुचां मुहुः।
विगलत्यधुना दण्डयात्रोद्योगो महीभुजाम्' ॥

'[4]गुरुशुश्रूषया बुद्धिर्मधुगोष्ठ्या मनोभवः।
उदयेन शशाङ्कस्य पयोराशिर्विवर्धते' ॥

दीपकवन्निदर्शनमपि संक्षिप्तमित्याह--

**क्रिययैव स्वतदर्थान्वयख्यापनं निदर्शनम् ॥ २० ॥**

क्रिययैव शुद्धया स्वस्यात्मनस्तदर्थस्य चान्वयस्य संबन्धस्य ख्यापनं [5]संवलित (लुलित) हेतुदृष्टान्तविभागं निदर्शनम्। यथा--

'अत्युच्चपदाध्यासः पतनायेत्यर्थशालिनां शंसत्।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः' ॥

पततीति क्रिया। तस्याः स्वं पतनम्। तदर्थोऽत्युच्चपदाध्यासः पतनायेति शंसनम्। तस्य ख्यापनमर्थशालिनां शंसदिति।

इदं च नार्थान्तरन्यासः। स ह्यन्यथाभूतः। तमाह--

---

१ उपमानेति। एकस्यैव प्रधानसंबन्धितया सकृदुपात्तस्य पदस्य वाक्यान्तरेषु प्रसङ्गात् संबन्धोऽनुषङ्गः।

२ भूष्यन्त इत्यत्र आदिदीपकम्।

३ बाष्प इत्यत्र मध्यदीपकम्।

४ गुरुशुश्रूषयेत्यत्र अन्तदीपकम्।

५ संलुलितेति। संलुलितः अविवेचितः हेतुदृष्टान्तयोर्विभागस्तस्य दर्शनाद्विवेचनात्, निगूढहेतुदृष्टान्तदर्शनरूपत्वान्निदर्शनमित्यर्थः।

**उक्तसिद्धयै वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः ॥२१॥**

उक्तसिद्धयै उक्तस्यार्थस्य सिद्धयर्थं वस्तुनो वाक्यार्थान्तरस्यैव न्यसनमर्थान्तरन्यासः। वस्तुग्रहणादर्थस्य हेतोर्न्यसनं नार्थान्तरन्यासः। 'इह नातिदूरगोचरमस्ति सरः। कमलसौगन्ध्यात्' इति। अर्थान्तरस्यैवेति वचनम्, यत्र हेतुर्व्याप्तिगूढत्वात्कथंचित्प्रतीयते तत्र यथा स्यात्। 'यद्यत्कृतकं तत्तदनित्यम्' इत्येवंप्रायेषु मा भूदिति। उदाहरणम्—

'[१]प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि'॥

अर्थान्तरन्यासस्य हेतुरूपत्वात् हेतोश्चान्वयव्यतिरेकात्मकत्वात् न पृथग्व्यतिरेक इति केचित्। तन्निरासार्थमाह—

**उपमेयस्य गुणातिरेकत्वं व्यतिरेकः ॥ २२ ॥**

उपमेयस्य गुणातिरेकत्वं गुणाधिक्यं यत् अर्थादुपमानात् सव्यतिरेकः। यथा—

'[२]सत्यं हरिणशावाक्ष्याः प्रसन्नसुभगं मुखम्।
समानं शशिनः किं तु स कलङ्कविडम्बितः'॥

कश्चित्तु गम्यमानगुणो व्यतिरेकः। यथा

'कुवलयवनं प्रत्याख्यातं नवं मधु निन्दितं
हसितममृतं भग्नं स्वादोः पदं रससंपदः।
विषमुपहितं चिन्ताव्याजान्मनस्यपि कामिनां
चतुरमधुरैर्लीलातन्त्रैस्तवार्धविलोकितैः'॥

व्यतिरेकाद्विशेषोक्तेर्भेदं दर्शयितुमाह—

---

१ प्रियेणेति। अत्र विशेषरूपमुपमेयं सामान्येनोपमानेन समर्थ्यते।

२ सत्यमिति। अत्र कलङ्कविडम्बितपदवाच्येनोपमानस्यापकर्षहेतुनाकलङ्कत्वगुणेनोपमेयस्यार्थादकलङ्कित्वलक्षणं गुणातिरेकित्वमिति व्यतिरेकः।

**एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः ॥ २३ ॥**

एकस्य गुणस्य हानेः कल्पनायां शेषैर्गुणैः साम्यं यत्तस्य दार्ढ्यं विशेषोक्तिः । रूपकं चेदं प्रायेणेति । यथा—

'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः'।

'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्'।

'निद्रेयमकमला लक्ष्मीः ।'

'हस्ती हि जङ्गमं दुर्गम् ।' इति ।

अत्रापि जङ्गमशब्दस्य स्थावरत्वनिवृत्तिप्रतिपादनत्वादेकगुणहानिकल्पनैव । एतेन—

'वेश्या हि नाम मूर्तिमत्येव निकृतिः'।

'व्यसनं हि नाम सोच्छ्वासं मरणम्'।

'द्विजो भूमिबृहस्पतिः'।

इत्येवमादिष्वेकगुणहानिकल्पना व्याख्याता ।

व्यतिरेकविशेषोक्तिभ्यां व्याजस्तुतिं भिन्नां दर्शयितुमाह—

**संभाव्यविशिष्टकर्माकरणान्निन्दा स्तोत्रार्था व्याजस्तुतिः ॥२४॥**

अत्यन्तगुणाधिको विशिष्टस्तस्य च कर्म विशिष्टकर्म तस्य संभाव्यस्य कर्तुं शक्यस्याकरणान्निन्दा विशिष्टसाम्यसंपादनेन स्तोत्रार्था व्याजस्तुतिः । यथा—

'बबन्ध सिन्धुं गिरिचक्रवालैर्बिभेद सप्तैकशरेण तालान् ।
एवंविधं कर्म ततान रामस्त्वया कृतं तन्न मुधैव गर्वः' ॥

व्याजस्तुतेर्व्याजोक्तिं भिन्नां दर्शयितुमाह—

**व्याजस्य सत्यसारूप्यं व्याजोक्तिः ॥ २५ ॥**

---

१ अतैलपूरा इति, असिंहासनमिति, अकमलेत्यत्रैकगुणहानिकल्पना सिध्यति।

२ विशिष्टो रामादिरुपमानभूतस्तस्य कर्म सेतुबन्धनादि । तस्य कर्तुं शक्यस्य कर्मणोऽकरणाद्वर्णनीयस्य निन्दा रामादिसाम्यापादनात् स्तुतिपर्यवसायिनी व्याजस्तुतिः । बबन्धेति । त्वं राम एवासीति तात्पर्यम् । निन्दाव्याजेन स्तुतिरूपत्वात् व्यतिरेकविशेषोक्तिभ्यां भेदः ।

व्याजस्य च्छद्मनः सत्येन सारूप्यं व्याजोक्तिः । यां मायोक्तिरित्याहुः ।
यथा—

'[1]शरच्चन्द्रांशुगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं कृतम्' ॥

व्याजस्तुतेः पृथक्तुल्ययोगितेत्याह—

**विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ॥ २६ ॥**

विशिष्टेन न्यूनस्य साम्यार्थमेककालायां क्रियायां योगस्तुल्ययोगिता ।
यथा—

'जलनिधिरशनामिमां धरित्रीं वहति भुजंगविभुर्भवद्भुजश्च' ।

**उपमानाक्षेपश्चाक्षेपः ॥ २७ ॥**

उपमान्यस्याक्षेपः प्रतिषेध उपमानाक्षेपः । तुल्यकार्यार्थस्य नैरर्थक्यविवक्षायाम् । यथा—

'तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ च यदि चेत्किं नाम नीलोत्पलैः ।
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
हा धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः' ॥

उपमान्यस्याक्षेपतः प्रतिपत्तिरित्यपि सूत्रार्थः । यथा—

'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार' ॥

अत्र शरद्वेश्येव, इन्दुं नायकमिव, रवेः प्रतिनायकस्येवेत्युपमानानि गम्यन्त इति ।

तुल्ययोगितायाः सहोक्तेर्भेदमाह—

**वस्तुद्वयक्रिययोस्तुल्यकालयोरेकपदाभिधानं सहोक्तिः ॥२८॥**

---

१ अत्र सत्येन सात्त्विकभावेन कृतोऽश्रुपातः पुष्पलवेन कृत इत्यसत्यस्य सत्यतोक्तिरत एव व्याजस्तुतितो भेदः ।

वस्तुद्वयस्य क्रिययोस्तुल्यकालयोरेकेन पदेनाभिधानं सहार्थशब्दसामर्थ्यात्सहोक्तिः । यथा—

'अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि' ।

अत्रार्थयोर्न्यूनत्वविशिष्टत्वे न स्त इति नेयं तुल्ययोगितेति ।

समाहितमेकमवशिष्यते तल्लक्षणार्थमाह—

**यत्सादृश्यं तत्संपत्तिः समाहितम् ॥ २९ ॥**

[1]यस्य वस्तुनः सादृश्यं गृह्यते तस्य वस्तुनः संपत्तिः समाहितम् । यथा—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामोहमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा' ॥

विक्र. ४. ३८

अत्र पुरूरवसो लतायामुर्वश्याः सादृश्यं गृह्णतः सैव लतोर्वशी संपन्नेति ।

एते चालंकाराः शुद्धा मिश्राश्च प्रयोक्तव्या इति विशिष्टानामलंकाराणां मिश्रत्वं संसृष्टिरित्याह—

**अलंकारस्यालंकारयोगित्वं संसृष्टिः ॥ ३० ॥**

अलंकारस्यालंकारयोगित्वं यदसौ संसृष्टिरिति । संसृष्टिः संसर्गः संबन्ध इति ।

**तद्भेदावुपमारूपकोत्प्रेक्षावयवौ ॥ ३१ ॥**

तस्याः संसृष्टेर्भेदावुपमारूपकं चोत्प्रेक्षावयवश्चेति । उपमाजन्यं रूपकमुपमारूपकमिति । यथा—

---

१ तस्य संपत्तिस्तदाकारतापरिणतिः, ताद्रूप्यसंपत्तिरिति यावत् । अत्रोदाहरणं विक्रमोर्वशीये दर्शयितुमाह—तन्वीति । लतायामुर्वशीसादृश्यं पश्यतः पुरूरवस इयमुक्तिः । अत्रेति । लतामवलोक्य तत्राश्रुधौताधरत्वाभरणशून्यत्वचिन्तामौनाश्रितत्वाध्यवसायेन सा तादृश्युर्वशीवेत्युत्प्रेक्षमाणस्य पुरूरवसः सैव लतोर्वशी संपन्नेति लताया उर्वशीत्वसंपत्तेः संभवात् समाहितम् । समनन्तरक्षणभावित्वेऽपि तत्संपत्तेस्तस्य तादात्विकत्वाभिमानं सूचयितुं भूतप्रत्ययः ॥

''निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इव भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः'॥

एवं 'रजनिपुरंध्रिरोध्रतिलकः शशी' इत्येवमादयस्तद्भेदा द्रष्टव्याः ।

**उत्प्रेक्षाहेतुरुत्प्रेक्षावयवः ॥ ३२ ॥**

उत्प्रेक्षाया हेतुरलंकार उत्प्रेक्षावयवः । अवयवशब्दो ह्यारम्भकं लक्षयति। यथा—

'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी'॥

एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः ।
शब्दवैचित्र्यगर्भेयमुपमैव प्रपञ्चिता ॥
अलंकारैकदेशा ये मताः सौभाग्यभागिनः ।
तेऽप्यलंकारदेशीया योजनीयाः कवीश्वरैः ॥

इतिकाव्यालंकारसूत्रवृत्तावालंकारिके चतुर्थेऽधिकरणे उपमाप्रपञ्चाधिकारो नाम तृतीयोऽध्यायः ।

**समाप्तं चेदमालंकारिकं चतुर्थमधिकरणम् ।**

---

१ यथेति । नन्वत्र कूर्ममूर्तेः कंदत्वारोपाल्लोकानां वल्लित्वारोपणं वक्तुं युक्तम्। तथा च रूपकजन्यमिह रूपकमिति वक्तव्यम् । यन्मतान्तरे परंपरितरूपकमित्युच्यते। तत्कथमिदमुपमाजन्यं रूपकमिति चेत्, सत्यम्, लोको वल्लिरिव लोकवल्लिः । व्याघ्रादेराकृतिगणत्वादुपमितसमासः । लोकवल्ल्याः कंद इति कूर्ममूर्तौ कंदत्वारोपणमिह ग्रन्थकृतो विवक्षितमिति न दोषः । इत्थमेव रजनिपुरंध्रीत्यादावपि ।

२ अङ्गुलीभिरिति । अत्रोपमारूपकानुप्राणितस्य श्लेषस्य उत्प्रेक्षोपपादकत्वादुत्प्रेक्षावयवत्वम् ।

## प्रायोगिकं नाम पञ्चममधिकरणम् ।

### काव्यसमयो नाम प्रथमोऽध्यायः ।

संप्रति काव्यसमयं शब्दशुद्धिं च दर्शयितुं प्रायोगिकाख्यमधिकरणमारभ्यते । तत्र काव्यसमयस्तावदुच्यते—

**नैकं पदं द्विः प्रयोज्यं प्रायेण ॥ १ ॥**

एकं पदं न द्विः प्रयोज्यं प्रायेण बाहुल्येन । यथा—' पयोद पयोद ' इति । किंचिदिवादिपदं द्विरपि प्रयोक्तव्यमिति । यथा—' सन्तः सन्तः खलाः खलाः ' ।

**नित्यं संहितैकपदवत्पादेष्वर्धान्तवर्जम् ॥ २ ॥**

नित्यं संहिता पादेष्वेकपदवदेकस्मिन्निव पदे । तत्र हि नित्या संहितेत्याम्नाय : । यथा—' संहितैकपदे नित्या नित्या धातूपसर्गयोः ' इति । अर्धान्तवर्जमर्धान्तं वर्जयित्वा ।

**न पादान्तलघोर्गुरुत्वं च सर्वत्र ॥ ३ ॥**

पादान्तलघोर्गुरुत्वं प्रयोक्तव्यं न सर्वत्र न सर्वस्मिन्वृत्त इति । यथा—

' यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ' मृच्छ. १. ९.

[1]एवंप्रायेष्वेव वृत्तेष्विति । न पुनः

' वरूथिनीनां रजसि प्रसर्पति समस्तमासीद्विनिमीलितं जगत् । '

इत्यादिषु । चकारोऽर्धान्तवर्जमित्यस्यानुकर्षणार्थ : ।

---

१ एवंप्रायेष्विति ।
' श्रीतिप्पभूपालक मध्यलोकदेवन्द्र वज्राङ्गदचन्द्रिकाभिः ।
त्वद्बाहुराभाति हसन्निवायं प्रोढौ प्रदाने मणिपरिजातौ । '
इत्यादिषु इन्द्रवज्रादिषु उपजातिभेदेष्वपि द्रष्टव्यम् ।

**न गद्ये समासप्रायं वृत्तमन्यत्रोद्धतादिभ्यः संवादात् ॥ ४ ॥**

गद्ये समासप्रायं वृत्तं न विधेयम्। शोभाभ्रंशात्। अन्यत्रोद्धतादिभ्यो विषमवृत्तेभ्यः। संवादात् गद्येनेति।

**न पादादौ खल्वादयः ॥ ५ ॥**

[1]पादादौ खल्वादयः शब्दा न प्रयोज्याः। आदिशब्दः प्रकारार्थः। येषामादौ प्रयोगो न श्लिष्यति ते गृह्यन्ते। न पुनर्वतहन्तप्रभृतयः।

**नार्धे किंचिदसमाप्तप्रायं वाक्यम् ॥ ६ ॥**

वृत्तस्यार्धे किंचिदसमाप्तप्रायं न प्रयोक्तव्यम्। यथा—

'जयन्ति ताण्डवे शंभोर्भङ्गुराङ्गुलिकोटयः।
कराः कृष्णस्य च भुजाश्चकांशुकपिशात्विषः॥'

**न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः ॥ ७ ॥**

बहुव्रीहिप्रतिपत्तिं करोति यः कर्मधारयः स न प्रयोक्तव्यः। यथा— 'अध्यासितश्चासौ तरूश्चाध्यासिततरुः' इति।

**तेन विपर्ययो व्याख्यातः ॥ ८ ॥**

बहुव्रीहिरपि कर्मधारयप्रतिपत्तिकरो न प्रयोक्तव्यः। यथा—'वीराः पुरुषा यस्य स वीरपुरुषः'। 'कलो रवो यस्य स कलरवः।' इति

**संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ॥ ९ ॥**

संभाव्यस्य निषेधस्य निवर्तने द्वौ प्रतिषेधौ प्रयोक्तव्यौ। यथा—

'समरमूर्धनि येन तरस्विना न न जितो विजयी त्रिदशेश्वरः
स खलु तापसबाणपरम्पराकवलितक्षतजः क्षितिमाश्रितः'॥

**विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ ॥ १० ॥**

विशेष्यस्य प्रतिपत्तौ जातायां विशेषणमात्रस्यैव प्रयोगः। यथा—

---

१ यथा—'खलक्त्वा खलु वाचिकम्' 'इव सीतागृहच्छद्मच्छन्नो लङ्कापतिः पुरा।' 'किल सृजति कामिनीनां किलकिञ्चितमेव कामिजनमोहम्।' इत्यादि।

''निधानगर्भामिव सागराम्बराम्' रघु ३.९। अत्र हि पृथिव्या विशेषणमात्रमेव प्रत्युक्तम् । एतेन

'क्रुद्धस्य तस्याथ पुरामरातेर्ललाटपट्टादुदगादुदर्चिः' ।

'गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः' ।

इत्यादयः प्रयोगा व्याख्याताः । माघ १.१२

**सर्वनाम्नानुसंधिर्वृत्तिच्छन्नस्य ॥ ११ ॥**

सर्वनाम्नानुसंधिरनुसंधानं प्रत्यवमर्शः । वृत्तिछन्नस्य वृत्तौ समासे छन्नस्य गुणीभूतस्य । यथा—

'तवापि नीलोत्पलपत्रचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः' इति ।

**संबन्धसंबन्धेऽपि षष्ठी क्वचित् ॥ १२ ॥**

संबन्धेन संबन्धः संबन्धसंबन्धस्तस्मिन् षष्ठी प्रयोज्या क्वचित्, न सर्वत्रेति । यथा—'कमलस्य कन्दः' इति । कमलेन संबद्धा कमलिनी नलिनी तस्याः कन्द इति संबन्धासंबन्धः । तेन कदलीकाण्डादयो व्याख्याताः ।

**अतिप्रयुक्तं देशभाषापदम् ॥ १३ ॥**

अतीव कविभिः प्रयुक्तं देशभाषापदं प्रयोज्यम् । यथा—

'योषिदेत्यभिललाष न हालां' इत्यत्र हालेति देशभाषापदम् । अनतिप्रयुक्तं तु न प्रयोज्यम् । यथा—

'कङ्केलीकाननालीरविरलविलसत्पल्लवा नर्तयन्तः' इत्यत्र कङ्केलीपदम् ।

**लिङ्गाध्याहारौ ॥ १४ ॥**

---

१ निधानेति । अत्र सागराम्बरत्वं भुव एव, ऊर्ध्वार्चिर्योगश्चाग्नेरेव; तडित्संबन्धश्चमेघस्यैवेत्येषामनन्यसाधारणत्वम् । यत्र तु विशेषणमाहिम्ना प्रतिपन्नं विशेष्यं साधारणविशेषणविशिष्टमभिधित्सितम्, तत्र विशेष्यस्यापि गतार्थस्य प्रयोगे न दोष इत्यपि द्रष्टव्यम् ।

२ तद्रेण्विति । अत्र तच्छब्दः समासे उपसर्जनीभूतं नीलोत्पलं परामृशति ।

३ कङ्केलिरशोकः ।

लिङ्गं चाध्याहारश्च लिङ्गाध्याहारावतिप्रयुक्तौ प्रयोज्याविति । यथा— ' वत्से मा बहु निःश्वसीः कुरु सुरागण्डूषमेकं शनैः ' इत्यादिषु गण्डूषशब्दः पुंसि भूयसा प्रयुक्तः, न स्त्रियामाम्नातोऽपि स्त्रीत्वे ।[1]

अध्याहारो यथा—

' मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥ '

अत्र हि धाक्षीदित्यादीनामध्याहारोऽन्वयप्रयुक्तः ।[2]

**लक्षणाशब्दाश्च ॥ १५ ॥**

लक्षणाशब्दाश्चातिप्रयुक्ताः प्रयोज्याः । यथा द्विरेफरथचरणशब्दौ भ्रमरचक्रवाकार्थौ लक्षणापरौ । अनतिप्रयुक्ताश्च न प्रयोक्तव्याः । यथा—द्विकः काक इति ।

**न तद्बाहुल्यमेकत्र ॥ १६ ॥**

तेषां लक्षणाशब्दानां बाहुल्यमेकस्मिन्वाक्ये न प्रयोक्तव्यम् । शक्यते ह्येकस्यावाचकस्य वाचकवद्भावः कर्तुम्, न बहूनामिति ।

**स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण ॥ १७ ॥**

स्तनादीनां द्वित्वाविष्टा द्वित्वाध्यासिता जातिः प्रायेण बाहुल्येनेति । यथा—' स्तनयोः स्तरुणीजनस्य— ' इति । प्रायेणेति वचनात्क्वचिन्न भवति । यथा—' स्त्रीणां चक्षुः ' इति । अथ कथं द्वित्वाविष्टत्वं जातेः । तद्धि द्रव्ये, न जातौ । अतद्रूपत्वाज्जातेः । न दोषः । तदतद्रूपत्वाज्जातेः । कथं तदतद्रूपत्वं जातेः । तद्धि जैमिनीया जानन्ति । वयं तु लक्ष्यसिद्धौ

---

१ न स्त्रियामिति । ' शुण्डाग्रभागे गण्डूषा द्वयोस्तु मुखपूरणे ' इति स्त्रीत्वेऽप्याम्नातः स्त्रियां न प्रयुज्यते ।

२ धाक्षीदित्यत्र आदिपदेन भाङ्क्षीत्, छैत्सीत्, भैत्सीत् इत्येषामध्याहारो दुष्यति, अतिप्रयुक्तत्वेन बुध्यारूढत्वादिति भावः ।

सिद्धपरमतानुवादिनः । न चैवमतिप्रसङ्गः लक्ष्यानुसारित्वान्न्यायस्येति । एवमन्यापि व्यवस्थोह्या ।

इति काव्यालंकारसूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे काव्यसमये नाम प्रथमोऽध्यायः ।

---

शब्दशुद्धिर्नाम द्वितीयोऽध्यायः ।

सांप्रतं शब्दशुद्धिरुच्यते---

**रुद्रावित्येकशेषोऽन्वेष्यः ॥ १ ॥**

रुद्रावित्यत्र प्रयोगे एकशेषोऽन्वेष्योऽन्वेषणीयः । रुद्रश्च रुद्राणी चेति 'पुमान्स्त्रिया' इत्येकशेषः । स च न प्राप्नोति । तत्र हि 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तत इति तत्रैवकारकरणात् स्त्रीपुंसकृत एव विशेषो भवतीति व्यवस्थितम् । अत्र तु 'पुंयोगादाख्यायाम्' इति विशेषान्तरमप्यस्तीति । एतेनेन्द्रौ भवौ शर्वावित्यादयः प्रयोगाः प्रत्युक्ताः ।

**मिलिक्लविक्षपिप्रभृतीनां धातुत्वम् । धातुगणस्यासमाप्तेः ॥ २ ॥**

मिलतिविक्लवतिक्षपयतीत्यादयः प्रयोगाः । तत्र मिलिक्लविक्षपिप्रभृतीनां कथं धातुत्वम् । गणपाठात् गणपठितानामेव धातुसंज्ञाविधानात् । तत्राह---धातुगणस्यासमाप्तेः । वर्धते धातुगण इति हि शब्दविद आचक्षते । तेनैषां गणपाठोऽनुमतः शिष्टप्रयोगादिति ।

**वलेरात्मनेपदमनित्यं ज्ञापकात् ॥ ३ ॥**

वलेरनुदात्तेत्त्वादात्मनेपदं यत्तदनित्यं दृश्यते 'लज्जालोलं वलन्ती' इत्यादि प्रयोगेषु । तत्कथमित्याह---ज्ञापकात् ।

किं पुनस्तज्ज्ञापकमत आह---

**चक्षिङो ङ्यनुबन्धकरणम् ॥ ४ ॥**

चक्षिङ इकारेणैवानुदात्तेन सिद्धमात्मनेपदं । किमर्थं ङित्करणम् । यत्क्रियते अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम् । एतेन वेदिभर्त्सि-

तर्जिप्रभृतयो व्याख्याताः । आवेदयति-भर्त्सयति-तर्जयतीत्यादीनां प्रयोगाणां दर्शनात् । अन्यत्राप्यनुदात्तनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन द्रष्टव्यमिति ।

**क्षीयत इति कर्मकर्तरि ॥ ५ ॥**

क्षीयत इति प्रयोगो दृश्यते स कर्मकर्तरि द्रष्टव्यः । क्षीयतेरनात्मनेपदित्वात् ।

**स्विद्यत इति च ॥ ६ ॥**

स्विद्यत इति च प्रयोगो दृश्यते सोऽपि कर्मकर्तर्येव द्रष्टव्यः, न कर्तरि । अदैवादिकत्वात्स्विदेः ।

**मार्गेरात्मनेपदमलक्ष्म ॥ ७ ॥**

चुरादौ 'मार्ग अन्वेषणे' इति पठ्यते 'आ धृषाद्वा' इति विकल्पितणिच्कः तस्माद्यदात्मनेपदं दृश्यते—'मार्गन्तां देहभारं'—इति तदलक्ष्म अलक्षणम् । परस्मैपदित्वान्मार्गेः । तथा च शिष्टप्रयोगः—'करकिसलयं धूत्वा धूत्वा विमार्गति वाससी ।'

**लोलमानादयश्चानशि ॥ ८ ॥**

लोलमानो वेल्लमान इत्यादयश्चानशि द्रष्टव्याः । शानचस्त्वभावः । परस्मैपदित्वाद्धातूनामिति ।

**लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे ॥ ९ ॥**

अस्त्ययं लभिर्यः प्राप्त्युपसर्जनां गतिमाह, अस्ति च गत्युपसर्जनां प्राप्तिमाहेति । अत्र पूर्वस्मिन्पक्षे गत्यर्थत्वाल्लभेर्णिच्यणौ यः कर्ता तस्य गत्यादिसूत्रेण कर्मसंज्ञा । यथा—

'दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः' ।

द्वितीयपक्षे गत्यर्थाल्लभेर्णिच्यणौ कर्तुर्न कर्मसंज्ञा । यथा—

'सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः' ॥

माघ १, २५

**ते-मे-शब्दौ निपातेषु ॥ १० ॥**

त्वयामयेत्यस्मिन्नर्थे ते-मे-शब्दौ निपातेषु द्रष्टव्यौ। यथा—
'श्रुतं ते वचनं तस्य', 'वेदानधीत इति नाधिगतं पुरा मे'।

**तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारात् ॥ ११ ॥**

तिरस्कृत इति शब्दः परिभूते दृश्यते। 'राज्ञा तिरस्कृतः' इति। स च न प्राप्नोति। तिरःशब्दस्य हि 'तिरोऽन्तर्धौ' इत्यन्तर्धौ गतिसंज्ञा। तस्यां च सत्यां 'तिरसोऽन्यतरस्याम्' इति सकारः तत्कथं तिरस्कृत इति परिभूते आह—अन्तर्ध्युपचारादिति परिभूतो ह्यन्तर्हितवद्भवति। मुख्यस्तु प्रयोगो यथा—'लावण्यप्रसरतिरस्कृताङ्गलेखां' इति।

**नैकशब्दः सुप्सुपेतिसमासात् ॥ १२ ॥**

'अरण्यानीस्थानं फलनमितनैकद्रुममिदं' इत्यादिषु नैकशब्दो दृश्यते स च न सिध्यति। नञ्समासे 'नलोपो नञः' इति नलोपे 'तस्मान्नुडचि इति नुडागमे सत्यनेकमिति रूपं स्यात्। निरनुबन्धस्य नशब्दस्य समासलक्षणं नास्ति। तत्कथं नैकशब्द इत्याह—सुप्सुपेति समासात्।

**मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पाठात् ॥ १३ ॥**

'मधुपिपासुमधुव्रतसेवितं मुकुलजालमजृम्भत वीरुधाम्' इत्यादिषु मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पिपासुप्रभृतीनां पाठात्। श्रितादिषु गमिगाम्यादीनाम् इति द्वितीयासमासलक्षणं दर्शयति।

**त्रिवलीशब्दः सिद्धः संज्ञाचेत् ॥ १४ ॥**

त्रिवलीत्ययं शब्दः सिद्धो यदि संज्ञा। 'दिक्संख्ये संज्ञायाम्' इति संज्ञायामेव समासविधानात्।

**बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम् ॥ १५ ॥**

'बिम्बाधरः पीयते' इति प्रयोगो दृश्यते। स च न युक्तः। अधरबिम्ब इति भवितव्यम्। 'उपमितं व्याघ्रादिभिः—' इति समासे सति। तत्कथं बिम्बाधर इत्याह—वृत्तौ मध्यमपदलोपिन्यां शाकपार्थिवादित्वा-

त्समासे। मध्यमपदलोपिनि समासे सति बिम्बाकारोऽधरो बिम्बाधर इति। तेन बिम्बौष्ठशब्दोऽपि व्याख्यातः। अत्रापि पूर्ववद्वृत्तिः। शिष्टप्रयोगेषु चैष विधिः। तेन नातिप्रसङ्गः।

**आमूललोलादिषु वृत्तिर्विस्पष्टपटुवत् ॥ १६ ॥**

आमूललोलमामूलसरलमित्यादिषु वृत्तिर्विस्पष्टपटुवत्। मयूरव्यंसकादित्वात्। लोलमिव लोलम् आमूलं च तल्लोलं चेति।

**न धान्यषष्ठादिषु षष्ठीसमासप्रतिषेधः। पूरणेनान्यताद्धितान्तत्वात् ॥ १७ ॥**

धान्यषष्ठं 'तान्युञ्छषष्ठाङ्कितसैकतानि' इत्यादिषु न षष्ठीसमासप्रतिषेधः। पूरणेन पूरणप्रत्ययान्तेनान्यतद्धितान्तत्वात्। षष्ठो भागः षष्ठ इति। 'पूरणाद्भागे तीयादन्' 'षष्ठाष्टमाभ्यां ञ च' इत्यन्विधानात्स प्राप्तः।

**पत्रपीतिमादिषु गुणवचनेन ॥ १८ ॥**

पत्रपीतिमा पत्रालीपिङ्गलिम्नः इत्यादिषु षष्ठीसमासप्रतिषेधो गुणवचनेन प्राप्तो बालिश्यात्तु न कृतः।

**अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ॥ १९ ॥**

अवर्ज्यो न वर्जनीयो व्यधिकरणो बहुव्रीहिः। जन्माद्युत्तरपदं यस्य स जन्माद्युत्तरपदः। यथा—'शास्त्रार्थजन्मा हि विवेकलाभः', 'कण्ठवृत्तयः प्राणाः' इति।

**हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् ॥ २० ॥**

हस्ताग्रमग्रहस्तः पुष्पाग्रमग्रपुष्पमित्यादयः प्रयोगाः कथम्। आहिताग्न्यादिष्वपाठात्। पाठे वा तदनियमः स्यात्। आह—गुणगुणिनोर्भेदाभेदात्। तत्र भेदात् हस्ताग्रादयः। अभेदादग्रहस्तादयः।

**पूर्वनिपातेऽपभ्रंशो रक्ष्यः ॥ २१ ॥**

काष्ठतृणं तृणकाष्ठमिति यदृच्छया पूर्वनिपातं कुर्वन्ति तत्रापभ्रंशो रक्ष्यो रक्षणीयः। अनित्यत्वज्ञापनं तु न सर्वविषयमिति।

**निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात् ॥ २२ ॥**

'अनभिहिते' इत्यत्र सूत्रे तिङ् कृत्तद्धितसमासैरिति परिगणनं कृतं तस्य प्रायिकत्वान्निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिर्भवति। यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' (कु. २.५५) इति। 'पण्डितं मूर्ख इति मन्यते'।

**शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् ॥ २३ ॥**

शकेः 'शकिसहोश्च' इति कर्मणि यति कृते शक्यमिति रूपं भवति। विलिङ्गवचनस्यापि विरुद्धलिङ्गवचनस्यापि कर्माभिधायां कर्मवचने सामान्योपक्रमात् विशेषानपेक्षायामिति। यथा--

'शक्यमोषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः' ॥

अत्र भाष्यकृद्वचनं लिङ्गम्। यथा—'शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति। न चैकान्तिकः सामान्योपक्रमः। तेन—'शक्या भङ्कुं झटिति बिसिनीकन्दवच्चन्द्रपादाः' इत्यपि भवति।

**हानिवदाधिक्यमप्यङ्गानां विकारः ॥ २४ ॥**

'येनाङ्गविकारः' इत्यत्र सूत्रे यथाङ्गानां हानिस्तथाधिक्यमपि विकारः। यथा—'अक्ष्णा काणः' इति भवति, तथा 'मुखेन त्रिलोचनः' इत्यपि भवति।

**न कृमिकीटानामिति। एकवद्भावप्रसंगात् ॥ २५ ॥**

'आयुषः कृमिकीटानामलंकरणमल्पता' इत्यत्र कृमिकीटानामिति प्रयोगो न युक्तः। 'क्षुद्रजन्तवः' इत्येकवद्भावप्रसङ्गात्। न च मध्यमपदलोपी समासो युक्तः। तस्यासर्वविषयत्वात्।

**न, खरोष्ट्रौ। उष्ट्रखरमिति पाठात् ॥ २६ ॥**

'खरोष्ट्रौ वाहनं येषाम्' इत्यत्र खरोष्ट्राविति प्रयोगो न युक्तः। गवाश्वप्रभृतिषूष्ट्रखरमिति पाठात्।

**आसेत्यसतेः ॥ २७ ॥**

'लावण्यमुत्पाद्य इवास यत्नः' इत्यत्रासेत्यसतेर्धातोः 'अस गतिदीप्त्यादानेषु' इत्यस्य प्रयोगः, नास्तेः। भूभावविधानात्।

**युध्येदिति युधः क्यचि ॥ २८ ॥**

'यो भर्तृपिण्डस्य कृते न युध्येत्'(प्रतिज्ञायौगंधरायण ४.३)इति प्रयोगः स चायुक्तः। युधेरात्मनेपदित्वात्। तत्कथं युध्येदित्याह—युधः क्यचि। युधमात्मन इच्छेद्युध्येदिति।

**विरलायमानादिषु क्यङ् निरूप्यः ॥ २९ ॥**

'विरलायमाने मलयमारुते' इत्यादिषु क्यङ् निरूप्यः। भृशादिषु पाठात्। नापि क्यष्। लोहितादिष्वपाठात्।

**अहेतौ हन्तेर्णिच्। चुरादिपाठात् ॥ ३० ॥**

'घातयित्वा दशास्यम्' इत्यत्राहेतौ णिच् दृश्यते स कथमित्याह— चुरादिपाठात्। चुरादिषु "चट स्फुटभेदे' 'घट संघाते' हन्त्यर्थाश्च" इति पाठात्।

**अनुचरीति चरेष्टित्वात् ॥ ३१ ॥**

'अनुचरी प्रियतमा मदालसा' इत्यत्रानुचरीति न युक्तः। ईकारलक्षणाभावात्। तत्कथम्। आह—चरेष्टित्वात्। पचादिषु चरडिति पठ्यते।

**केसरालमित्यलतेराणि ॥ ३२ ॥**

'केसरालं शिलीन्ध्रं' इत्यत्र केसरालमिति कथम्। आह—अलतेराणि। 'अलं भूषणपर्याप्तिवारणेषु' इत्यस्माद्धातोः केसरशब्दे कर्मण्युपपदे 'कर्मण्यण्' इत्यनेनाणि सति केसरालमिति सिद्ध्यति।

**पत्रलमिति लातेः के ॥ ३३ ॥**

'पत्रलं वनमिदं विराजते' इत्यत्र पत्रलमिति कथम्। आह—लातेः

के। 'ला आदाने' इत्येतस्माद्धातोरादानार्थात् पत्रशब्दे कर्मण्युपपदे 'आतोऽनुपसर्गे कः' इति कप्रत्यये सतीति।

**महीध्रादयो मूलविभुजादिदर्शनात् ॥ ३४ ॥**

महीध्रधरणीध्रादयः शब्दाः मूलविभुजादिदर्शनात्कप्रत्यये सतीति। महीं धरतीति महीध्र इति। एवमादयोऽन्येऽपि द्रष्टव्याः ॥

**ब्रह्मादिषु हन्तेर्नियमादरिहाद्यसिद्धिः ॥ ३५ ॥**

ब्रह्मादिषूपपदेषु हन्तेः क्विब्विधौ 'ब्रह्मभ्रूणवृत्रेषु--' इत्यत्रारिहा रिपुहा इत्येवमादीनामसिद्धिः। नियमात्। 'ब्रह्मादिष्वेव, हन्तेरेव, क्विबेव, भूतकाल एवेति चतुर्विधश्चात्र नियमः' इति नियमान्यतरविषयो निरूप्यः।

**ब्रह्मविदादयः कृदन्तवृत्त्या ॥ ३६ ॥**

ब्रह्मवित्वृत्रभिदित्यादयः प्रयोगा न युक्ताः। 'ब्रह्मभ्रूण--' इत्यादिषु 'हन्तेरेव' इति नियमात्। आह—कृदन्तवृत्त्या। वेत्तीति वित्। भिनत्तीति भित्। 'क्विप् च' इति क्विप्। ततः कृदन्तैर्विदादिभिः सह ब्रह्मादीनां षष्ठीसमास इति।

**तैर्महीधरादयो व्याख्याताः ॥ ३७ ॥**

तैर्विदादिभिर्महीधरादयो व्याख्याताः। धरतीति धरः। मह्या धरो महीधरः। एवं गङ्गाधरादयो व्याख्याताः।

**भिदुरादयः कर्मकर्तरि कर्तरि च ॥ ३८ ॥**

भिदुरं काष्ठम्। भिदुरं तमः। 'तिमिरभिदुरं व्योम्नः शृङ्गं--' इति। छिदुरातपो दिवसः। मत्सरच्छिदुरं प्रेम। भङ्गुरा प्रीतिः। 'मातङ्गं मानभङ्गुरम्' इत्यादयो हि प्रयोगा दृश्यन्ते। कथमित्याह—ते कर्मकर्तरि कर्तरि च भवन्ति। 'कर्मकर्तरि चायमिष्यते' इत्यत्र हि चकारः कर्तरि चेत्यस्य समुच्चयार्थः।

**गुणविस्तरादयश्चिन्त्याः ॥ ३९ ॥**

गुणविस्तरः व्याक्षेपविस्तरः इत्यादयः प्रयोगाश्चिन्त्याः । 'प्रथने वावशब्दे' इति घञ्प्रसङ्गात् ।

**अवतरावचायशब्दयोर्दीर्घह्रस्वत्वव्यत्यासो बालानाम् ॥ ४० ॥**

अवतरशब्दस्यावचायशब्दस्य च दीर्घत्वह्रस्वत्वयोर्व्यत्यासो बालानां बालिशानां प्रयोगेष्विति । ते ह्यवतरणमवतार इति प्रयुञ्जते । मारुतावतार इति । स ह्ययुक्तः । भावे तरतेरविधानात् । अवचयनमवचय इति प्रयुञ्जते । पुष्पावचय इति । अत्र 'हस्तादाने चेरस्तेये' इति घञ्प्राप्त इति ।

**शोभेतिनिपातनात् ॥ ४१ ॥**

शोभेत्ययं शब्दः साधुः । निपातनात् । 'शुभ शुम्भ शोभार्थौ' इति शुभेर्भिदादेराकृतिगणत्वादङ् सिद्ध एव । गुणप्रतिषेधाभावस्तु निपात्यत इति । शोभार्थावित्यत्रैकदेशे किं शोभा, आहोस्विच्छोभ इति विशेषावगतिराचार्यपरम्परोपदेशादिति ।

**अविधौ गुरोः स्त्रियां बहुलं विवक्षा ॥ ४२ ॥**

अविधावविधाने 'गुरोश्च हलः' इति स्त्रियां बहुलं विवक्षा । क्वचिद्विवक्षा, क्वचिदविवक्षा, क्वचिदुभयमिति । विवक्षा यथा--ईहा लज्जेति । अविवक्षा यथा—आतङ्क इति । विवक्षाविवक्षे यथा—बाधा बाधः, ऊहा ऊहः, व्रीडा:, व्रीडः इति ।

**व्यवसितादिषु क्तः कर्तरि चकारात् ॥ ४३ ॥**

व्यवसितः प्रतिपन्न इत्यादिषु भावकर्मविहितोऽपि क्तः कर्तरि । गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् । भावकर्मानुकर्षणार्थत्वं चकारस्येति चेत्, आवृत्तिः कर्तव्या ।

**आहेति भूतेऽन्यलडन्तभ्रमाद् ब्रुवो लटि ॥ ४४ ॥**

'ब्रुवः पञ्चानां–' इत्यादिना आहेति लटयुत्पादितः । स भूते प्रयुक्तः 'इत्याह भगवान्प्रभुः' इति । अन्यस्य भूतकालाभिधायिनो लडन्तस्य लिटि भ्रमात् । निपुणाश्चैवं प्रयुञ्जते—आह स्म स्मितमधुमधुराक्षरां गिरम्'

इति। 'अनुकरोति भगवतो नारायणस्य '(काद.६) इत्यत्रापि मन्ये 'स्म' शब्दः कविना प्रयुक्तो लेखकैस्तु प्रमादान्न लिखित इति।

**शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः ॥ ४५ ॥**

'उपस्रोतः स्वस्थस्थितमहिषशृङ्गाग्रशबलाः
स्रवन्तीनां जाताः प्रमुदितविहंगास्तटभुवः।'
'भ्रमरोत्करकल्माषाः कुसुमानां समृद्धयः।'

इत्यादिषु स्त्रियां टापोऽप्राप्तिः। 'अन्यतो ङीष्' इति ङीष्विधानात्। तेन शबली कल्माषीति भवति।

**प्राणिनि नीलेति चिन्त्यम् ॥ ४६ ॥**

'कुवलयदलनीला कोकिला बालचूते' इत्यादिषु नीलेति चिन्त्यम् कोकिला नीलीति भवितव्यम्। नीलशब्दात् 'जानपद--' इत्यादि सूत्रेण 'प्राणिनि च' इति ङीष्विधानात्।

**मनुष्यजातेर्विवक्षाविवक्षे ॥ ४७ ॥**

'इतो मनुष्यजातेः' 'ऊङुतः' इत्यत्र मनुष्यजातेर्विवक्षा अविवक्षा च लक्ष्यानुसारतः।

'मन्दरस्य मदिराक्षि पार्श्वतो निम्ननाभि न भवन्ति निम्नगाः।
वासु वासुकिविकर्षणोद्भवा भामिनीह पदवी विभाव्यते ॥'

अत्र मनुष्यजातेर्विवक्षायां 'इतो मनुष्यजातेः' इति ङीषि सति 'अम्बार्थनद्योर्ह्रस्वः' इति संबुद्धौ ह्रस्वत्वं सिद्ध्यति। नाभिशब्दात्पुनः 'इतश्च प्राण्यङ्गात्' इतीकारे कृते निम्ननाभीकेति स्यात्।

'हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम्।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥'

अत्र निमग्ननाभेरिति मनुष्यजातेरविवक्षेति ङीष् न कृतः। 'सुतनु जहिहि कोपं-' इत्यत्र मनुष्यजातेर्विवक्षेति सुतनुशब्दात् 'ऊङुतः' इत्यूङि सति ह्रस्वत्वे सुतन्विति सिध्यति। 'वरतनुरथवासौ नैव दृष्टा त्वया मे '(विक.४)। अत्र मनुष्यजातेरविवक्षेत्यूङ् न कृतः।

**ऊकारान्तादप्यूङ्प्रवृत्तेः ॥ ४८ ॥**

उत ऊङ् विहितः । ऊकारान्तादपि क्वचिद्भवति । आचार्यप्रवृत्तेः । कासौ प्रवृत्तिः । ' अप्राणिजातेश्चारज्ज्वादीनाम् ' इति अलाबूः कर्कन्धूरित्युदाहरणम् । तेन ' सुभ्रु किं संभ्रमेण ' । अत्र सुभ्रुशब्द ऊङि सिद्धो भवति । ऊङि त्वसति सुभ्रूरिति स्यात् ।

**कार्तिकीय इति ठञ् दुर्धरः ॥ ४९ ॥**

' कार्तिकीयो नभस्वान् ' इत्यत्र ' कालाट्ठञ् ' इति ठञ् दुर्धरः । ठञ् भवनं दुःखेन ध्रियत इति ।

**शार्वरमिति च ॥ ५० ॥**

' शार्वरं तमः ' इत्यत्र च ' कालाट्ठञ् ' इति ठञ् दुर्धरः ।

**शाश्वतमिति प्रयुक्तेः ॥ ५१ ॥**

' शाश्वतं ज्योतिः ' इत्यत्र शाश्वतमिति न सिद्ध्यति । ' कालाट्ठञ् ' इति ठञ्प्रसङ्गात् । ' येषां च विरोधः शाश्वतिकः ' इति सूत्रकारस्यापि प्रयोगः । आह——प्रयुक्तेः । ' शाश्वते प्रतिषेधः ' इति प्रयोगात् शाश्वतमिति भवति ।

**राजवंश्यादयः साध्वर्थे य भवन्ति ॥ ५२ ॥**

राजवंश्याः सूर्यवंश्या इत्यादयः शब्दाः ' तत्र साधुः ' इत्यनेन साध्वर्थे यति प्रत्यये सति साधवो भवन्ति । भवार्थे पुनर्दिगादिपाठेऽपि वंशशब्दस्य वंशशब्दान्तान्न यत्प्रत्ययः । तदन्तविधेः प्रतिषेधात् ।

**दारवशब्दो दुष्प्रयुक्तः ॥ ५३ ॥**

' दारवं पात्रम् ' इति दारवशब्दो दुष्प्रयुक्तः । ' नित्यं वृद्धशरादिभ्यः ' इति मयटा भवितव्यम् । ननु विकारावयवयोरर्थयोर्मयड् विधीयते । अत्र तु दारुण इदमिति विवक्षायां दारवमिति भविष्यति । नैवमपि स्यात् । ' वृद्धाच्छः ' इति च्छविधानात् ।

**मुग्धिमादिष्विमनिज् मृग्यः ॥ ५४ ॥**

मुग्धिमाप्रौढिमेत्यादिषु इमनिज् मृग्यः अन्वेषणीय इति ।

**औपम्यादयश्चातुर्वर्ण्यवत् ॥ ५५ ॥**

औपम्यं सांनिध्यमित्यादयश्चातुर्वर्ण्यवत् 'गुणवचन--' इत्यत्र 'चातुर्वर्ण्यादीनां [ स्वार्थे ] उपसंख्यानम्' इति वार्तिकात्स्वार्थिकष्यञन्ताः ।

**ष्युञः षित्करणादीकारो बहूलम् ॥ ५६ ॥**

'गुणवचनब्राम्हणादिभ्यः' इति यः ष्यञ् तस्य षित्करणादीकारो भवति स बहुलम् । ब्राम्हण्यमित्यादिषु न भवति ।

**सामग्र्यमित्यादिषु विकल्पेन ॥ ५७ ॥**

सामग्र्यं सामग्री । वैदग्ध्यं वैदग्धीति ।

**धन्वीति व्रीह्यादिषु पाठात् ॥ ५८ ॥**

व्रीह्यादिषु धन्वशब्दस्य पाठात् धन्वीति इनौ सति सिद्धो भवति ।

**चतुरस्रशोभीति णिनौ ॥ ५९ ॥**

'बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन'(कु १.१२)इत्यत्र चतुरस्रशोभीति न युक्तम् । व्रीह्यादिषु शोभाशब्दस्य पाठेऽपि इनिरत्र न सिध्यति। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । भवतु वा तदन्तविधिः षेधात् । भवतु वा तदन्तविधिः कर्मधारयान्मत्वर्थीयानुपपत्तिः । लघुत्वात्प्रक्रमस्येति बहुव्रीहिणैव भवितव्यम् । तत्कथमिति मत्वर्थीयस्याप्राप्तौ चतुरस्रशोभीतिप्रयोगः । आह---णिनौ । चतुरस्रं शोभत इति ताच्छीलिके णिनायं प्रयोगः । अथ 'अनुमेयशोभि' इति कथम् । नह्यत्र पूर्ववद्वृत्तिः शक्या कर्तुमिति शुभेः साधुकारिण्यावश्यके वा णिनिं कृत्वा तदन्ताद्भावप्रत्यये रश्चाद्बहुव्रीहिः कर्तव्यः । अनुमेयं शोभित्वं यस्येति । भावप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः । यथा निराकुलं तिष्ठति,' 'सधीरमुवाच' इति ।

**कञ्चुकीया इति क्यचि ॥ ६० ॥**

'जीवन्ति राजमहिषीमनु कञ्चुकीयाः' इति कथम् । मत्वर्थीयस्य छप्रत्ययस्याभावात् । आह---क्यचि । क्यचि प्रत्यये सति कञ्चुकीया इति भवति । कञ्चुकमात्मन इच्छन्ति कञ्चुकीयाः ।

**बौध्यप्रतियोग्यपेक्षायामप्यातिशायनिकाः ॥ ६१ ॥**

बौद्धस्य प्रतियोगिनोऽपेक्षायामप्यातिशायनिकास्तरवादयो भवन्ति। 'घनतरं तमः', 'बहुलतरं प्रेम' इति।

**कौशिलादय इलचि वर्णलोपात ॥ ६२ ॥**

कौशिलवासिल इत्यादयः कथम् । आह—कौशिकवासिष्ठादिभ्यः शब्देभ्यो नीतावनुकम्पायां वा 'घनिलचौ च' इति इलचि कृते 'ठाजादावूर्ध्वं द्वितीयादचः' इति वर्णलोपात्सिध्यन्ति।

**मौक्तिकमिति विनयादिपाठात् ॥ ६३ ॥**

मुक्तैव मौक्तिकमिति विनयादिपाठाद्द्रष्टव्यम् । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति नपुंसकत्वम् ॥

**प्रातिभादयः प्रज्ञादिषु ॥ ६४ ॥**

प्रातिभादयः शब्दाः प्रज्ञादिषुः द्रष्टव्याः। प्रतिभा—विकृति-द्वितादिभ्यः शब्देभ्यः प्रज्ञादिपाठादणि स्वार्थिके कृते प्रातिभं वैकृतं द्वैतमित्यादयः प्रयोगाः सिद्ध्यन्तीति।

**न सरजसमित्यनव्ययीभावे ॥ ६५ ॥**

'मधु सरजसं मध्येपद्मं पिबन्ति शिलीमुखाः' इत्यादिषु सरजसमिति न युक्तः प्रयोगः अनव्ययीभावे। अव्ययीभाव एव सरजसशब्दस्येष्टत्वात्।

**न धृतधनुषीत्यसंज्ञायाम् ॥ ६६ ॥**

'धृतधनुषि शौर्यशालिनि' इत्यत्र धृतधनुषीत्यसंज्ञायां न युक्तः प्रयोगः। 'धनुषश्च' इत्यनङ्विधानात्। संज्ञायां ह्यनङ् विकल्पितः 'वा संज्ञायाम्' इति।

**दुर्गन्धिपद इदुर्लभः ॥ ६७ ॥**

'दुर्गन्धिः कायः' इत्यादिषु दुर्गन्धिपदे इत्समासान्तो दुर्लभः । उत्पूत्यादिषु दुःशब्दस्यापाठात् ।

**सुदत्यादयः प्रतिविधेयाः ॥ ६८ ॥**

'सा दक्षरोषात्सुदती ससर्ज' इति, शिखरदति पतति रशना' इत्यादिषु सुदत्यादयः शब्दाः प्रतिविधेयाः । दत्रादेशलक्षणाभावात् । तत्र प्रतिविधानम्—"अग्रान्त-' आदिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्सुदत्यादिषु दत्रादेशः" इत्येके । अन्ये तु वर्णयन्ति—सुदत्यादयः स्त्र्यभिधायिनो योगरूढिशब्दाः । तेषु 'स्त्रियां संज्ञायाम्' इति दत्रादेशो विकल्पेन सिद्ध एवेति ।

**क्षतदृढोरस इति न कप् । तदन्तविधिप्रतिषेधात् ॥ ६९ ॥**

'प्लवंगनखकोटिभिः क्षतदृढोरसो राक्षसाः' इत्यत्र दृढोरःशब्दात् 'उरःप्रभृतिभ्यः कप्' इति कप् न कृतः । ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात् । वाक्यं त्वेवं कर्तव्यम्—क्षतं दृढोरो येषामिति ।

**अवेहीति वृद्धिरवद्या ॥ ७० ॥**

अवैहीत्यत्र वृद्धिरवद्या । गुण एव युक्त इति ।

**अपाङ्गनेत्रेति लुलगभ्यः ॥ ७१ ॥**

अपाङ्गे नेत्रे यस्याः सेयमपाङ्गनेत्रेत्यत्र लुगलभ्यः । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति सप्तम्या अलुग्विधानात् ।

**नेष्टाः श्लिष्टप्रियादयः । पुंवद्भावप्रतिषेधात् ॥ ७२ ॥**

श्लिष्टप्रियः वृद्धकान्तः इत्यादयो नेष्टाः । 'स्त्रियाः पुंवत्-' इति पुंवद्भावस्य प्रियादिषु निषेधात् ।

**दृढभक्तिरसौ सर्वत्रेति ॥ ७३ ॥**

'दृढभक्तिरसौ ज्येष्ठे ।' अत्र पूर्वपदस्य 'स्त्रियाम्' इत्यविवक्षितत्वात् ।

**जलजम्बुलतादयो ह्रस्वविधेः ॥ ७४ ॥**

'जलजम्बुलताविलाः स्रवन्त्यः' 'अग्रे कर्कन्धुग्रहणम्' इत्यादिषु कथं जलजम्बुलतादयः प्रयोगाः । आह—ह्रस्वविधेः । 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वविधानात् ।

**तिलकादयोऽजिरादिषु ॥ ७५ ॥**

तिलकादयः शब्दा अजिरादिषु द्रष्टव्याः । अन्यथा तिलकवती कनक-

वतीत्यादिषु मतुपि 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घत्वं स्यात्। केचित्तु वर्णयन्ति--'नद्यां मतुप्' इति यो मतुप् तत्रायं विधिः। तेषां मतेनामरवतीत्यादीनामसिद्धिः।

**निशम्यनिशमय्येशब्दौ प्रकृतिभेदात् ॥ ७६ ॥**

निशम्यनिशमय्येत्येतौ शब्दौ श्रुत्वेत्येतस्मिन्नर्थे। शमेः 'ल्यपि लघुपूर्वात्' इत्ययादेशे सति निशमय्येति भवितव्यम्, न निशम्येति। आह--प्रकृतिभेदात्। शमेर्दैवादिकस्य निशम्येति रूपम्। 'शमो दर्शने' इति चुरादौ णिचि मित्संज्ञकस्य निशमय्येति रूपम्।

**संयम्यनियम्यशब्दावणिजन्तत्वात् ॥ ७७ ॥**

कथं संयम्यनियम्येति। 'ल्यपि लघुपूर्वात्' इति णेरयादेशेन भवितव्यम्। आह---अणिजन्तत्वात्। धातोर्णिच् न कृतः। गतार्थत्वात्। यथा--'वाचं नियच्छति' इति। णिजर्थानवगतौ तु णिच् प्रयुज्यत एव। यथा—'संयमयितुमारब्धः' इति।

**प्रपीयेति पीङः ॥ ७८ ॥**

प्रपीयेत्ययं शब्दः 'पीङ् पाने' इत्येतस्य। पिबतेर्हि 'न ल्यपि' इतीत्वप्रतिषेधात्प्रपायेति भवति।

**दूरयतीति बहुलग्रहणात् ॥ ७९ ॥**

'दूरयत्यवनते विवस्वति' इत्यत्र दूरयतीति कथम्। णाविष्ठवद्भावे 'स्थूलदूर--' इत्यादिना गुणलोपयोः कृतयोर्दवयतीति भवितव्यम्। आह--बहुलग्रहणात्। 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यत्र बहुलग्रहणात् 'स्थूलदूर--' आदिसूत्रेण यद्विहितं तन्न भविष्यतीति।

**गच्छतीप्रभृतिष्वनिषेध्या नुम् ॥ ८० ॥**

'हरति हि वनराजिर्गच्छता श्यामभावम्' इत्यादिषु गच्छतीप्रभृतिषु शब्देषु 'श्यपश्यनोर्नित्यम्' इति नुमनिषेध्यो निषेद्धुमशक्यः।

**मित्रेण गोप्त्रेति पुंवद्भावात् ॥ ८१ ॥**

'मित्रेण गोप्त्रा' इति कथम्। गोप्तृणा भवितव्यम्। इकोऽचि वि-

भक्तौ ' इति नुम्विधानात् । आह—पुंवद्भावात् । 'तृतीयादिषु भाषित-पुंस्कं पुंवद्गालवस्य' इति पुंवद्भावेन गोष्ट्रोति भवति ।

**वेत्स्यसीति पदभङ्गात् ॥ ८२ ॥**

' पतितं वेत्स्यसि क्षितौ ' ( वेणी ३.४१ ) इत्यत्र वेत्स्यसीति न सिध्यति । इट्प्रसङ्गात् । आह—पदभङ्गात् सिध्यति । वेत्स्यसीति पदं भज्यते वेत्सि—असि । असीत्ययं निपातस्त्वमित्यस्मिन्नर्थे । क्वचिद्वाक्यालंकारे प्रयुज्यते । यथा—' पार्थिव त्वमसि सत्यमभ्यधाः ' इति ।

**कामयानशब्दः सिद्धोऽनादिश्चेत् ॥ ८३ ॥**

कामयानशब्दः सिद्धः ' आगमानुशासनमनित्यम् ' इति मुक्यकृते यधानादिः स्यात् ।

**सौहृददौर्हृदशब्दावणि हृद्भावात् ॥ ८४ ॥**

सुहृदयदुर्हृदयशब्दाभ्यां युवादिपाठादाणि कृते हृदयस्य हृद्भावः । आदिवृद्धौ सौहृददौर्हृदशब्दौ भवतः । सुहृद्दुर्हृच्छब्दाभ्यां युवादिपाठादेवाणि कृते ' हृद्भगसिन्ध्वन्ते—' इति हृदन्तस्य तद्धितेऽणि कृते सत्युभयपदवृद्धौ सत्यां सौहार्दं दौहार्दमिति भवति ।

**विरम इति निपातनात् ॥ ८५ ॥**

रमेरनुदात्तोपदेशत्वात् ' नोदात्तोपदेशस्य ' इत्यादिना वृद्धिप्रतिषेधस्याभावात्कथं विरम इति । आह—निपातनात् । निपातनं तु ' यम उपरमे ' इत्यत्रोपरम इति । अतन्त्रं चोपसर्ग इति ।

**उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया ॥ ८६ ॥**

उपर्यादिषु शब्देषु सामीप्ये द्विरुक्तेषु ' उपर्यध्यधसः सामीप्ये ' इत्यनेन उपर्यादिषु त्रिषु ' द्वितीयाम्रेडितन्तेषु ' इति द्वितीया । वीप्सायां तु द्विरुक्तेषु षष्ठ्येव भवति । ' उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः '

**मन्दमन्दमित्यप्रकारार्थत्वे ॥ ८७ ॥**

' मन्दं मन्दं नुदति पवनः ' इत्यत्र मन्दंमन्दमित्यप्रकारार्थे भवति । प्रकारार्थत्वे तु ' प्रकारे गुणवचनस्य ' इति द्विर्वचने कृते कर्मधारयवद्भावे

मन्दमन्दमिति प्रयोगः । मन्दंमन्दमित्यत्र तु ‘ नित्यवीप्सयोः ’ इति द्विर्वचनम् । अनेकभागात्मकस्य नुदेर्यदा सर्वे भागा मन्दत्वेन व्याप्तुमिष्टा भवन्ति तदा वीप्सेति ।

**न निद्राद्रुागिति । भष्भावप्राप्तेः ॥ ८८ ॥**

‘निद्राद्रुकाद्रवेयच्छविरुपरिलसद्धर्धरो वारिवाहः’ इत्यत्र निद्राद्रुागिति न युक्तः । ‘एकाचो बशो भष्–’ इति भष्भावप्राप्तेः । अनुप्रासप्रियैस्त्वपभ्रंशः कृतः ।

**निष्यन्द इति षत्वं चिन्त्यम् ॥ ८९ ॥**

नह्यत्र षत्वलक्षणमस्ति । कस्कादिपाठोऽप्यस्य न निश्चितः ।

**नाङ्गुलिसङ्ग इति । मूर्धन्याविधेः ॥ ९० ॥**

‘ म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रजः ’ इत्यत्राङ्गुलिसङ्ग इति न युक्तः । ‘समासेऽङ्गुलेः सङ्गः ’ इति मूर्धन्याविधानात् ।

**तेनावन्तिसेनादयः प्रत्युक्ताः ॥ ९१ ॥**

तेनाङ्गुलिसङ्ग इत्यनेनावन्तिसेन इन्दुसेन एवमादयः शब्दाः प्रत्युक्ताः प्रत्याख्याताः । सुषामादिषु ‘ एति संज्ञायामगात् ’ इति मूर्धन्यविधानात् ।

**नेन्द्रवाहने णत्वम् । आहितत्वस्याविवक्षितत्वात् ॥ ९२ ॥**

‘ कुथेन नागेन्द्रमिवेन्द्रवाहनम् ’ माघ १. इत्यत्रेन्द्रवाहनशब्दे ‘ वाहनमाहितात् ’ इति णत्वं न भवति । आहितत्वस्याविवक्षितत्वात् । स्वस्वामिभावमात्रं ह्यत्र विवक्षितम् । तेन सिद्धमिन्द्रवाहनमिति ।

सदसन्तो मया शब्दा विधिनाल्पेन दर्शिताः ।
अनयैव दिशा कार्यं शेषाणामप्यवेक्षणम् ॥

इति काव्यालंकारसूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे शब्दशुद्धिर्नाम द्वितीयोऽध्यायः ।

**समाप्तं चेदं प्रायोगिकं पञ्चममधिकरणम् ।**

---

ग्रन्थश्च समाप्तः ।

# सूत्रानुक्रमणिका.



# अथ पाठभेदाः।

| पृष्ठम् | सूत्र | वृत्ति | स्वीकृतपाठः | पाठभेदः |
|---|---|---|---|---|
| २ | १–१–५ | वृत्तौ | निबर्हितुम् | व्यपोहितुम् |
| ११ | १–३–१० | ,, | यथास्व० | यथायथम्, यथास्वरूपम् |
| १२ | १–३–१३ | ,, | ०संदधाति | आराधयति, आरोपयति |
| ,, | १–३–१४ | ,, | काव्यविद्यायाः | काव्यच्छायायाः |
| १४ | १–३–२६ | ,, | भिन्नं | भेदेन |
| १५ | १–३–३० | ,, | श्रेयः | श्रेयः। कस्मात्। ना॰ सप्रकरणकमङ्काथायोग॰ च। भाणः समवका॰ वीथीप्रहसनं डिमः। ईहामृगश्चेति। |
| १६ | २–१–५ | ,, | ०मसाधु | ०मसाधुपदम् |
| १७ | २–१–९ | ,, | न खल्विह...मे गता | एतन्नास्ति |
| १८ | २–१–११ | ,, | यौगिकार्थ | लौकिकार्थ |
| २१ | २–१–२० | ,, | स्तरलं | स्तरलाः |
| २२ | २–१–२२ | ,, | ०कलत्र० | ०कलत्रे |
| ,, | ,, | ,, | ०समुद्धतम् | ०समुद्धताः। |
| २४ | २–२–८ | ,, | ०नुबद्धानि | ०नुविद्धानि |
| २५ | ,, | ,, | ०दानाभ्याम् | ०दानान्माम् |
| ,, | ,, | ,, | पदवादसमुत्सुकम् | यदवारयदुत्सुकम् |
| २६ | २–२–१३ | ,, | विस्फुरितम् | विस्फूर्जितम् |
| २८ | २–२–१९ | ,, | कर्णावतंसादि समर्थनम् | एतन्नास्ति |
| २९ | २–२–२३ | ,, | ०नालिकेराढ्या | ०नालिकेरान्ता |
| ३० | ,, | ,, | सर्वस्या | कोशस्य |
| ,, | २–२–२४ | ,, | वयस्य | यस्य |
| ३१ | ,, | ,, | चुम्बननखर० | चुम्बनवन् नखर० |
| ३४ | ३–१–१२ | ,, | ०ञ्जुत० | ०स्नुत० |

| पृष्ठम् | सूत्र | वृत्ति | स्वीकृतपाठः | पाठभेदः |
|---|---|---|---|---|
| ३७ | ३–१–२२ | वृत्तौ | ०व्यवसितिः | ०समहृदि, ०सहृहृदि |
| ,, | ३–१–२३ | ,, | झटिति | भणित० |
| ३८ | ३–१–२५ | ,, | समस्त...गुम्फिता | समस्तपदविप्लुता |
| ४० | ३–२–२ | ,, | अरुणगुण | अरुणमणि |
| ,, | ,, | ,, | ०विष्कम्भ० | ०विश्रम्भ० |
| ,, | ,, | ,, | वीतामोदम् | बीजामोदम्; नीतामोदम् |
| ४१ | ,, | ,, | सुबन्धु | वसुबन्धु |
| ४३ | ३–२–१० | ,, | प्रतिकलम् | प्रविरले |
| ४५ | ३–२–१५ | ,, | नीवीनितम्बं | नीवीनिबन्धं |
| ४९ | ४–१–२ | ,, | बत जनः | भवजनः |
| ५१ | ४–१–६ | ,, | ताद्रूप्यविधिरय० | ताद्रूप्यं विधेयमिति |
| ५५ | ४–२–२ | ,, | भुग्नोन्नति | भग्नोन्नति |
| ५५ | ,, | ,, | ० मत्तहूण | ०मुण्डहूण |
| ,, | ,, | ,, | समन्तान्निर्याति | समन्तादुद्गाति |
| ,, | ४–२–३ | ,, | हरित | हरति; तरति |
| ,, | ,, | ,, | बभ्रुर्त्वग्वि० | बन्धुत्वग्वि० |
| ,, | ,, | ,, | नवचन्दनेन | हरिचन्दनेन |
| ५७ | ४–२–१० | ,, | ०रङ्गास्फालन | ०रङ्गाच्छादन |
| ६१ | ४–२–२० | ,, | विकासिनि | विलासिनि |
| ७२ | ४–२–२२ | ,, | भग्नं | हन्त |
| ,, | ,, | ,, | पदं रससंपदः | रसेषु निराकृतः |
| ७३ | ४–२–२३ | ,, | निद्रेयमकला | इयमकमला |
| ७४ | ४–२–२५ | ,, | मायोक्ति | पर्यायोक्ति |
| ७६ | ४–२–३२ | ,, | एभिर्निदर्शनैः | अत्रैभिर्लक्षणैः |
| ७८ | ५–१–९ | ,, | तरस्विना | यशस्विना |
| ८० | ५–१–१४ | ,, | वांहिनी...कुलिशं वा | वज्रमिन्द्रकरविप्रसृतं वा |